

श्रीपरमात्मने नमः ।

# सनातनजैनग्रंथमालायाः

प्रथम खंड।

स्याद्वादविद्यापतिश्रीमद्विद्यानन्दस्वामिविरचिता

१

## आप्तपरीक्षा

२

## पत्रपरीक्षा च

श्रीयुत पंडितगजाधरलालजैनशास्त्रिणा संपादिते

ते च

उस्मानाबादनिवासिस्वर्गीयश्रेष्ठिवर्यकस्तूरचंद्रस्यात्मजबालचंद्रस्य स्मरणार्थं

श्रीजैनधर्मप्रचारिणीसभाया मंत्रिणा

**श्रीपन्नालालजैनेन**

काशीस्थचंद्रप्रभानाम्नि मुद्रणयंत्रालये
प्रकाशिते ।

---

श्रीवीरनिर्वाणसंवत्सर २४३९ । विक्रम १९६९ ।

प्रथमं संस्करणं ] [अस्य ग्रंथस्य मूल्यमेको रूप्यकः ।

# प्रस्तावना ।

विद्वद्रसिकाः !

प्रार्थये किलाऽऽर्हतदुरवबोधानवद्याभिधेयाकृतबहिष्कृताऽऽत्मभिरुपपर्णयद्विधामलफेनस्फटिकधवलितक्षेयच्छिल्पनभुवनविलसितानवद्यतत्त्वनिकरं तत्त्वाभासतया, हृदयवेष्टनप्रकरणनास्तिकवचनस्यापि विगर्हणं कैश्चित् । तत्र नोपागच्छतीमेऽस्मत्पुरः सर्वथा कौतुकभाजनताम् । किन्त्वाऽऽर्हतमताऽवगानस्थानभूतानन्तत्वस्योपदर्शनप्रत्यूहव्यूहस्वरूपजिनसत्पथगामिनामेवायं महान् दोषः । नियतं चैतत्, यतस्सम्यग्वचःपरीक्षादक्षमानसोऽपि न हि तदभिमुखानयनमन्तरा समञ्जसतया परीक्षितुं क्षमते । वस्तुतस्तु निखिलमलविरहितात्ममुखविनिर्गताभिप्रायसाकल्यं सम्यक्तयानवगच्छमाना अप्यकारणाक्षेपकरणप्रवणा विद्वांसोऽपीमे न तस्य सुमुत्सुमनस्सत्करणसरणीं समध्यासजनतामुपदीकन्ते तेषामनात्मोचितपथगामितया रागद्वेषप्रसरमल्लमलिनात्मत्वेन च परहितप्रतिपादकवचनबहिष्कृतत्वात्, उन्मत्तविलसिताक्षेपोपेक्षयोरिव तत्कृताक्षेपोपेक्षयोर्निर्धारितत्वात्, क्षेपेऽपि निर्हेतुकमपरमाक्षिपन्नुपेक्षमाणश्च न हि विदुषां पुरस्तादंशमात्रमपि सम्मतिभाजनतां बिभर्ति । अभिमन्तिरिय किल मलवत्सस्माकं यदीमे विद्वांसोऽनुपेक्षमाणा अनाक्षिपन्तश्चार्हतमतस्य लोकिष्वतादृशीपत्र चार्हतपथगामिनस्तेभ्यो विविधप्रकीटकस्थानभूतकर्कशेभ्यो बहिर्विधाय निर्मलहितप्रतिपादनप्रवणानि नैकविधशास्त्राणि तदा नापसदस्य जैनधर्मो जैनेतरप्रामाणिकोपेक्षाक्षेपकक्षायां, किं च जैनतत्त्वोपदर्शनसामग्र्यभावे आक्षेपोपेक्षादिकरणहेतुना कुत्रापि प्राक् युक्तिसम्पत्प्रस्थापिपरपूर्वाचार्यदुर्वचनादिस्खलितविलोकनमात्रत एव सर्वथा वेपितमानसा अप्यार्हतसरणिशरणा वय नाद्यापि तद्दुर्वचनकण्टकं प्रमार्ष्टुं समुत्सहते । सहते च साम्प्रतिकजैनेतरविद्वद्भिक्षुरसुखनिःसृतनास्तिकवाममार्गीन्यादिदुर्वचनतीक्ष्णपरिहरणप्रवणादिव्यापमानशास्त्रराशीं बिभ्राणा अपि तेभ्योऽवज्ञामिति यद्यमद्य्यिल्पाधिक्यमाक्षिपति जैनानामस्मानतत्स्पर्धापारावारे । यावदार्हतवचतत्त्वस्वरूपमवभोत्स्यते आर्हतमतबहिर्भूतप्राज्ञसन्दोहो न सम्मतिपत्स्यते तावन्नास्तिकादिजैनेतरविद्वद्भिक्षुमुखनिःसृतदुर्वचनानां परिमार्जन । अतो दुर्वचनपरिमार्जनाभावितकारणं, जैनतत्त्वप्रदर्शनमेव जैनेतरविदुषां पुरस्तादस्मद्बुद्धिं परामृशति । तत एव दुर्वचनाहतचित्तस्य निम्नलिखितश्रेष्ठिवर्यसाहाय्यत प्रादुर्भूतं किलेदं सनातनजैनग्रन्थमालाभिधं कठिनतमं कार्यम् । अत्र च तद्ग्रन्थसाकल्यं प्रकाशपदतामुपयास्यते यस्मात् प्रधानतयार्हततत्त्वस्वरूपावबोधकं । आशासे सुभेच्छुविद्वत्परिकरो नियतमेतद्ग्रन्थमालासमुदाटितप्रपपारापारविलसिततत्त्वस्वरूपामृतामृतं स्वात्महिताधानिसमीहया लेक्ष्यते । नोपेक्ष्यते च नास्तिकापविनीतजनप्रल्पितदुर्वचनकक्षा समाश्रित्य पावनमिदमार्हतमतं, आत्माहितसपादनप्रवणरागद्वेषौ च त्यक्ष्यते । आर्हतमतपथगमनदाक्षिणामपि पुरस्तादास्माकमभ्यर्थनेयं यच्चेऽपि दुर्वचनपरिमार्जनकारणार्हततत्त्वोपदर्शनप्रयासाकुलाः स्युः । साम्प्रतं प्रथमाङ्के, आप्तपरीक्षापत्रपरीक्षेतिग्रन्थरत्नद्वयमुपस्थाप्यते, एतद्ग्रन्थमालातो विदुषां पुरस्तात् । प्रणेता किलैतद्ग्रन्थद्वयस्य स्याद्वादपतिर्विभुः श्रीविद्यानन्दस्वामी । महात्मायं कदा कुत्र कतम पत्तनमात्मीयवैदुष्येण विभूषयामासेत्यवगमिष्यति पाठकपरिकरो महोदयस्यैतज्जीवनविषयकोल्लेखनविलोकनतः । कीदृशमेतद्वैदुष्यं जैनतत्त्वस्वरूपं च कीदृशमिति प्रकटीकरणाय न प्रभवामो वयं विफलं स्वीयं समयं, विज्ञास्यते स्वयमेव विद्वत्सन्दोहः, एतन्महोदयकृतविलसितग्रन्थद्वयभरिततत्त्वस्वरूपामृतपानत एव । महात्मैतत्कृतविलसितभाष्यभूताष्टसहस्री श्लोकवार्तिकादिविविधग्रन्थसन्दोहदिवाकरोऽपि विद्योतते जैनधर्माम्बरे । सन्दोहेऽस्मिन् केचन ग्रन्था मुद्रणपथमानीता आनेष्यन्ते च केचनाविलम्बितकालमेवेति नात्र संशीतिः । संतुष्यति यथानिमान् विलोक्य प्राज्ञपरिकरः इति दृढीयसी विश्वस्तिश्च ।

**न हि धारणपर्याणं बोढुं शक्तो वनायुजः ।**

इति नीतिविद्वचनानुसरणसरणिप्रमेये प्रखरवैदुष्यमार्तण्डमयूखनिकरसकलभुवनविद्योतकविभु श्रीविद्यानन्दीक, कथाई मानवपार्नतभागेनापि विरहितात्मा मूढधी इति दुरवबोधग्रन्थरत्नद्वयसम्पादनाय न वरी-

वर्ति सामर्थ्यैलेशोऽपि मयि । तथापि प्रखरधार्ष्ट्यवशंवदात्मतया श्रीमत्प्रकाशकमहोदयैर्मद्वाळसमारोपितभारतया चारोपीदं कार्यं मया । मौर्ख्यं मामकीनमनवगणयमानोऽवगच्छमानश्च प्राथमिकं कार्यमिदं नियतं क्षमिष्यते विद्वत्परिकरो बहुत्रात्र मत्स्खलितविलोकनात्, इति विराजते प्राज्ञप्रवरसन्निकृष्टे विनतिततिर्महती ।

पूज्यपादश्रीमन्मत्सहोदरादिचक्षुरादिरुङ्निकरकारणकलापे समुपस्थिते मदनुपस्थितावनुष्ठित भूरिसाहाय्यमेतद्ग्रंथसंशोधनानेहसि महनीयविद्वद्वरपंडितलालारामैस्तनोऽस्म्यहमनुग्रहभाजनं चिरमुक्तपावनात्मनां ।

उस्मानाबादमंडनायमानश्रेष्टिवर्यश्रीपन्नालालचंद्रकस्तूरचंद्रात्मजश्रीमन्नेमिचंद्रप्रभृतिभिरार्हतमतमुद्धरणाय चाविर्भावाय तदनवद्यतत्त्वस्वरूपं भुवि, ग्रंथरत्नद्वयप्रकाशाय साकल्येन स्वकरसंपादितपवित्रद्रव्यव्ययमकृत तेषामयं महानुग्रहः । प्रार्थ्यंते चेमे पुरस्तादापन्थ्यमेवोपकृतये सकलजनहितंकरार्थं ।

उपाध्यायमहनीयपदविभूषितमित्रवरश्रीमत्पण्डितवासुदेवनेमिनाथैर्प्रेषितैकाप्तपरीक्षाप्रतिमूर्तिर्मत्पार्श्वे । सा च प्रायोतीवशुद्धासीत्ततएव मुद्रितं किलाप्तपरीक्षाभिधं महद्रत्नमित्येतदनुष्ठितसाहाय्याय चिरमनुगृहीतोऽस्मि श्रीमदुपाध्यायानां ।

ईडरपत्तनभारतीभवनादप्येतद्ग्रंथमुद्रणसाहाय्याय पुस्तकद्वयं समुपलब्धं तच्च शुद्धतममासीत् । पुरातनकरविलसितग्रंथनिकरानुस्वारप्रवणपरिपाटीविलोकनतो ग्रंथमालैतद्विलसितग्रंथसाकल्ये पंचमाक्षरमुपेक्षमाणैरस्माभिरनुस्वारसत्कृतिरेवाकृत भूरितया ।

प्रस्तावनोल्लेखे समुत्तरनिबंधसंकलने संपादने चैतद् ग्रंथरत्नद्वयस्य यत्रभूत्कुत्रापि मात्राक्षरादिस्खलितं मामकीनं तन्नियतं क्षमार्हमेवेति मुहुर्विदुषां पुरस्ताद्विनतशिरसाभ्यर्थना ।

काशी
भाद्रपदकृष्णा प्रतिपत
वीरनिर्वाण संवत् २४३९ ।

विदुषामनुचरो—
गजाधरलालजैनः ।



ॐ

ग्रंथकर्तुः

स्याद्वादविद्यापतिश्रीविद्यानंदस्वामिनः

# परिचयः ।

( जैनहितैषितः समुद्धृतः )

भो विविधप्रखरपाटवनिकरकोविदसाक्षरसंदोह !

विदितमेवैतदखिलकलाधुरीणानां श्रीमतां विदुषां यद्दर्शनन्यायाद्यनेकविषयपारगामीनि भूयांसि विद्वद्रत्नानि परिभूषयांचक्रिरे रत्नगर्भेत्यन्वर्थसंज्ञां बिभ्रतीमिमां वसुधरां । तत्र समुपालेभे दिगंबरजैनसंप्रदाये दार्शनिकनैयायिकादिविद्वत्परिपाट्यां दार्शनिको नैयायिकश्च श्रीमद्विद्यानंदी विद्यानंदस्वामी वा प्राकर्ष्येण विश्रुतिं । वैदुष्यं खल्वेतस्य महोदयस्यानन्यजनसंभव्यमेव समजनिष्ट । अद्याप्येतत्करसरोरुहलालितविविधविषयसुगंधभरितानेकग्रंथसमुदयमास्तां व्याप्नोति तत्कीर्तिगंधः सर्वासु दिक्षु । भविष्यति च यावद्दर्शनन्यायादिविषयसत्कवि संसृतौ व्याप्स्यत्येव तत्कीर्तिगंधममितं स हि—

पात्रकेसरीति ।

महात्मनः किंचैतस्य विद्यानंदिस्वामिनः पात्रकेसरिसंज्ञयापि भुवि विश्रुतिः परावर्तिष्ट अभिमतिरियं किंतु विषयेऽस्मिन् भूयसां विदुषां यत्पात्रकेसरीत्यन्वर्थसंज्ञां दधानोऽपर एव कश्चित्समजनि विद्वान्, किंतु निम्नलिखितप्रमाणपरिपाट्यावसीयते यत् पात्रकेसरीत्यपरनामभाग् विभुर्विद्यानंद एव संवृत्तो नान्य ।

सम्यक्त्वप्रकाशग्रंथे समुद्घोषितमेकत्र—

“तथा श्लोकवार्तिके विद्यानंद्यपरनामपात्रकेसरिणा यदुक्तं तच्च लिख्यते तत्त्वार्थश्रद्धानं सम्यग्दर्शनं, ननु सम्यग्दर्शनशब्दनिर्वचनसामर्थ्यादेव सम्यग्दर्शनस्वरूपनिर्णयादशेषतद्विप्रतिपत्तिनिवृत्तेः सिद्धत्वात्तदर्थं तल्लक्षणवचनं न युक्तिमदेवेति कस्यचिदारेका तामपाकरोति ।

अत्र संदर्भे श्लोकवार्तिकप्रणेता विद्यानंद एव सूचित ।

किं च श्रवणबेल्गुलस्थचनमङ्गनायमानश्रीदौर्बलिजिनदासशास्त्रिविहितग्रंथसमहे यो हि ताडपत्रोपरिलिखितादिपुराणग्रंथस्तट्टिप्पण्यामपि पात्रकेसरिसंज्ञां दधानो विभुर्विद्यानंद एवेत्युद्घोषित ।

अपरंच श्रीब्रह्मनेमिदत्तकरकमललालितकथाकोषविलसितपात्रकेसरिकथातोपीत्येवानुमीयते परापरविचारपरिपाट्या, यदुल्लेखः स हि विद्यानंदस्यैव नापरस्येति ।

अन्यच्च श्रीमद्वादिचंद्रसूरिणापि स्वकरकलितज्ञानसूर्योदयनाटकचतुर्थांके पात्रीभूतयाऽष्टशतीत्याख्यया स्त्रिया पुरुषं प्रति स्थापितं, यत्—

“देव तवोरस्थलाक्षितहृदया श्रीमत्पात्रकेसरिमुखकमलं गता तेन साक्षात्कृतसकलस्याद्वादाभिप्रायेण लालिता पालिताऽष्टसहस्रीतया पुष्टिं नीता । देव ! स यदि नापालयिष्यत् तदा कथं त्वामद्राक्षम् ” ।

अयमाकूतः किंचैतस्य संदर्भस्य यदस्ति श्रीमद्भट्टाकलंकदेवनिर्मिताष्टशतीग्रंथको दुरवबोधो ग्रंथ, तदनवगततात्पर्यमनवगम्यमाना कियंतो विद्वांसः मानापिचन्मत्सरभावमदात्मतयानवधमपि तथास्पर्शद्वारं विप-

रीतमेवांगीकुर्वाणाश्च कुपिता संबभूवुः आचक्रमुश्च तदुपरि। विलोक्य तदविनीतवृत्तिमिमां श्रीमद्विद्यानंदिप्रभुः विरचयामास तदाशयं समंजसतया विशदीकुर्वाणाष्टशतीसंज्ञकं भाष्यग्रंथं। अतोनुमीयते श्रीमदष्टसहस्रीरचयिता पात्रकेसरीत्यपराभिधानो विद्यानंदस्वाम्येवेति।

अन्यच्च हुमचानगरशिलालेखोद्धृतचरमवाक्यतोऽपि विद्यानंद्येव पात्रकेसरीति विनिश्चीयते। इति प्रमाणपंचकेनावगम्यते निस्संशयं किलैतद्यद्विद्यानंद्येव पात्रकेसरीत्यपराभिधानो नापर इति।

विज्ञायते किलैतदस्माभिर्यद्यावद्विदांवरोयं महात्मार्हतदीक्षादीक्षितो नाभूत्तावदेव पात्रकेसरीत्यभिहितिमधत्त। आर्हतपथानुगामिसमये तु निखिलजनहृदयानंददां विद्यानंदसंज्ञामभार्षीत् अतएव श्रीब्रह्मनेमिदत्तमहोदयेनैतदार्हनपथानुगामित्वोल्लेखे यावन्नाजन्ययं महात्मा जैनमार्गानुगामी तावत्पात्रकेसरीत्यभिधया विज्ञापितः। जैनधर्मदीक्षादीक्षितत्वे तु विद्यानंदिनाम्नेति तत एव महात्मायं पुराननस्वीयनामोल्लेखनानावश्यकतामवगच्छमानो नाविर्भावयांचक्रे पात्रकेसरीत्यात्मीयं परार्चीन नाम कुत्रापि स्वकरकलितग्रंथसंदोहे।

विभुरयं विद्यानंदी समजनि खलु नंदिसंघस्याचार्य इत्यनुमीयते। न खलु निश्चयेन प्रतिपादयितुं शक्यते। विशुद्धात्मनः किलैतस्य दीक्षाचार्यः कः कश्चोपाध्यायपदाविरूढोऽभूदिति न समंजसतयावसीयतेऽस्माभिः। कतमेऽपि स्वकररचितग्रंथे समुल्लेखोऽपि न कृतोनेन स्वामिना स्वगुरुपरंपरायाः।

## पात्रकेसरिकथा।

भट्टारक-श्रीमत्प्रभाचंद्रब्रह्मनेमिदत्ताभ्यां या स्वरचितकथाकोशग्रंथे पात्रकेसरिणः कथा विलिखिता ततएव किंचिद् विज्ञायते न ततोऽधिकं किमप्यनवद्यप्रतिभस्यैतस्य विदुषो जीवनेतिहासे समीचीनतयावगम्यते खेदयति किलाऽस्मदैशीयेतिहाससामिग्रयभावोयमस्मन्मनः।

वरीवर्ति पात्रकेसरिणः किलेत्थं कथा—

आस्तिस्म कश्चिन्मगधदेशांतोऽहिच्छत्रपुरेऽन्वर्थसंज्ञां बिभ्राणोऽवनिपालोनामावनिपालः तस्य च परिषदि वेदवेदांगादिविविधविषयपारावारपारदर्शिनः शतपंचकब्राह्मणविद्वद्रत्नानि समभूवन्। राजधान्यां च तस्यावनिपालस्य राजतेस्म कश्चिन्नानाविधमणितोरणादिविभूषितः श्रीपार्श्वजिनेंद्रमंदिरः—अथकदाचित्ससजनि कुतूहलस्तेषां विदुषां पार्श्वजिनालयं विलोकयितुं। यदा च सर्वे ते तं विलोकयितुमगमन् तदा तत्र पार्श्वजिनाभिमुखीभूय जिनभक्तिवशंगतश्चारित्रभूषणाभिधानः कश्चित्परमर्षिः देवागमस्तोत्र पठन् दृष्टिगोचरतां समापतत्। समाकर्ण्य च तन्मुनिलपननिःसृतस्तोत्रमवोचत्तदन्यतमविद्वदग्रणीः श्रीमत्पात्रकेसरी विदांवरः। मुने! समंजसतयाभाति किल भवल्लपननिःसृतं स्तोत्रमिदं अनुगृह्य मुहुः श्रावयतु पापठ्येदमिति श्रुत्वा भक्तिवशंवदतद्विज्ञवचनं, यतिमंगादिदोषं परिहरमाणः स मुनिः पुनरपि तत्स्तोत्रं पठितुमारेभे विद्वान् पात्रकेसर्यपि तत्तात्पर्यं हृदयस्थं समीहमानो भक्त्या शुश्राव च। यदा च तत्स्तोत्रं परिपूर्णतामगमत् तत्तात्पर्यं च श्रीमत्पात्रकेसरिबुद्धिस्थमभूत्, तदात्वे एव तस्य विदुषः प्रबलदर्शनमोहकर्मणः क्षयोपशमः संप्रत्यपादि। विचचार च स्वचेतसि स यज्जीवाजीवादितत्त्वस्वरूपोपवर्णनमार्हतमार्गानुसार्येवानवद्य नान्यस्येति, स्थिते सत्येवं प्रत्यहमेतन्महोदयस्य, आर्हतमततत्त्वबुभुत्सालता वृद्धिं समुपागच्छत्। स्वसहचारिभिः सह परावृत्य च जिनालयान्महात्मायमेनमेवविषयं परामम् परंतु रजन्यां स्वशयनावासे शयानस्य तस्य विदुषः साहसिकोयं विचारो बुद्धौ समारुरोह यत् यद्यप्यार्हमते प्रमाणपद्धतिः समीचीना किंत्वनुमानप्रमाणलक्षणं किमभिमतमिति नावगतं, चिंतापारावारे निमग्ने सत्येवं तस्मिन् विदुषि अवधिबलतस्तत्तात्पर्यं जानती भगवती पद्मावती पुरस्तात्समुपस्थायावोचत् प्राज्ञप्रवर! नैवंविधचिताभाजनमसि। भगवत्पार्श्वदर्शनसमयएवैतच्छंसीतिपरावृत्तिर्भविष्यति भवतां। विज्ञास्यते चानवद्यानुमानस्वरूपमित्युक्त्वांतरधात् गत्वा च जिनालये पार्श्वजिनफणमडपोपरि विलिलेख च।

---

१ ब्रह्मचारी नेमिदत्तोयं समजनि किल भट्टारकनेमिचंद्रांतेवासी। अभूदयं १६ तमायां शताब्दौ। भट्टारकप्रभाचंद्रकलितकथाकोशस्यानेनैव ब्रह्मचारिणा पद्यानुवादोविहितः।

"अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं । नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं" ॥

इत्यनवद्यपद्यम् ।

अपरस्मिन्नहनि विद्वान् स हि पात्रकेसरी प्रत्यूषसि सप्रश्नगाम्भीर्यगमत्पार्श्वजिनमन्दिरे । परावृत्ते च तस्य महात्मनोऽगम्यसंशीतिमर्गणत्फणोपरिदृष्टिसपाते श्रीमद्देवीपद्मकुलोशायस्थवितानमचपद्यं पठित्वा । निर्धारित चैतत्तेन यदन्यथानुपपन्नत्वस्वरूपव्याप्तिज्ञानमेवानवद्यानुमान, रीत्या किलानया सप्रत्ययभूतकृदीयं महती विश्वस्तिर्यत्, भगवदर्हन्निवासस्थापनाविर्भूतधर्मएव लोकद्वयसुखावहो महान् धर्म', तदनु श्रीपात्रकेसरिविदुषा स्वसहधारिणां पुरस्तादप्यार्हतधर्मप्रशंसा कृत्वा उपदिष्टाश्च ते । तदुपदेशामृतोत्सुकामा द्विपंतश्च शास्त्रार्थ मार्गेण परामृता तथा च पर्यन्ते श्रीमत्पात्रकेसरिवैदुष्यदिवाकरस्य पुरस्तादात्मीयवैदुष्यं दीपकत्वं विधाय सहावनिपालभूपतिना सर्वे ते अनवद्यार्हतधर्मसेविनः सम्प्रतिपेदिरे । कथयानया परमिदमेवानुगम्यते विभु' श्रीविद्यानंदी मगधराज्यान्तर्गताहिच्छत्रपुरनिवासी ब्राह्मणकुलोत्पन्नश्चासीत् जैनधर्मधारणात्प्रागयं महात्मा नैयायिकमीमांसकादिवैदिकान्यतमधर्मानुयायीचाभूत् । सम्प्रत्यपि अहिच्छत्रस्थाने अहिक्षितिपार्श्वनाथाभिधया भुवि वर्तते रामनगरोप्यस्यैवापराभिधा। स्थानमिदमुत्तरप्रांते बरेलीपचनासन्नेऽस्ति । श्रीपार्श्वजिनेन्द्रस्यात्र कैवल्यबोधाबाप्तिरत्रैव समजनि । भक्तश्च कमठासुरोऽत्रैवानस्योपसर्गं पार्श्वजिनोपरि । निवृत्ते च छत्रीभूयधरणेन्द्रेण तत् अतोऽस्तीद जैनानां पावन क्षेत्रं । आमनति च भक्ति विनतास्ते तत् । एतत्क्षेत्रस्यपार्श्वजिनाख्यतो समस्ति भुवि महती विश्रुति' क्षेत्रस्यास्य । अभूदत्र कश्चिदवनिपालो भूपाल' (१) प्रश्नगास्तस्य राजधान्यात्मतां क्षेत्रमिदमिति निर्णयाय न वरीवर्ति पार्श्वेऽस्माकं किमपि सबलतर गमक ।

## विद्यानन्दिनिवासस्थिति: ।

विभुर्विद्यानंदी उत्तरप्रांतभवनएवासीदित्येवोद्घोष्यते कथयानया किं तु दक्षिणात्यकार्णाटिकप्रभृतिभिरेव तत्रीयनविपयकोल्लेखविशेषकरणात् दक्षिणकर्णाटकशिलालेखेष्वेव तदुल्लेखविशेषदर्शनाच्च निष्प्रत्यूहं विज्ञायतेऽस्माभिर्यदय विद्वान् दाक्षिणात्य' कार्णाटिक एव वासीत् । किं च यस्मिन् समये श्रीमानयं परजनहितप्रतिपादनतया दाक्षिणं कार्णाटिक वा भारतवर्षमागमलंचकार तदास्ते एव स हि भारतवर्षमाग' स्तत्वरमहमडनमिश्रप्रभृतिवैदिकविदुषां जैनविदुषां चासीद्विवादाख्य, श्रीमद्भट्टाकलंकप्रभाचन्द्रजिनसेन माणिक्यनन्द्यादिजैनाचार्या अपि तत्समकालीना एव समभूवन् स हि समय' प्रदेशश्च तथाविध एवासीत् यदत्र विद्यानन्दिसदृशप्रखरविद्वद्भिरेव भवितव्यं ।

कर्णाटकदेशस्य शिमोगाप्रांतान्तर्गतहुमचाग्रामप्राप्तशिलालेखे येषां येषां भूपतीनां सभासु विभुर्विद्यानंदी प्रखरविद्वद्भि' शास्त्रार्थपथा विजयमवाप्येत्युल्लेखो वर्तते ते सर्वे भूपतयो दाक्षिणात्या कार्णाटिकाश्चासन्निति प्रमाणेनापि दाक्षिणात्येन कार्णाटिकेनैव वा भाव्यं श्रीमद्विद्यानंदिनोत्पन्नवर्षं निश्चीयते ।

हुमचानगरप्राप्तशिलालेखाभिप्रायमिदं ।

१ । नवराज्यपट्टणमहीपतिनृपपरिषदि श्रीमद्विद्यानंदिस्वामिना नन्दनमल्लिभट्टाभिधोमिदग्धो विहितानवद्यविवादमर्यादया विनिग्ये ।

२ । द्यानवद्यपद्यैकप्रभावेण श्रीशतवेन्द्रनरपतिसभायां श्रीविद्यानन्दिविभुना निखिलश्रोतारो विस्मयपदमानीता' ।

३ । शाल्वमल्लिभूपतिसंसदि स्वीयामलवचनपाटवपराभूतवादिविदुष' अभवत्स विद्यानंदिप्रभु ।

४ । सलुवदेवपृथ्वीपतिपरिषदि नैकविधपरवादिमल्लजल्पनविनिर्गतसिद्धांतसन्दोह मिद्धांताभासत्वया ऽनुसीकृत्यार्हतमतं प्रभावितं ।

५ । बिलगीपत्तननरनरपतिनरसिंहसंसदि समुद्घोषितं किल प्रभावो जैनमतस्य श्रीमद्विद्यानंदिप्रभुणा ।

६ । **कारकलनगरस्थभैरवाचार्य**राजपरिषदि जैनमतगौरवं प्रदर्श्य तत्प्रभावं विजजृंभे **श्रीविद्यानंदिप्रभुः** ।

७ । **विदरीनगर**निवासिभावुकलोकेभ्यः श्रीमद्विद्यानंदिप्रभुणा स्वधर्मज्ञानप्राकर्ष्येण सम्यक्त्वावाप्तिः कारिता ।

८ । यस्य **नरसिंहराजात्मजकृष्णराजस्य** संसदि नमतिस्म नरपतिसहस्रकं तस्यां परिषदि हेविद्यानंदिप्रभो त्वया समुद्दीपितो जैनधर्मः पराभूताश्च मत्तपरवादिनः ।

९ । **कोप्पना**द्यनेकतीर्थक्षेत्रेषु कारयित्वा द्रव्यवैपुल्यव्ययं हे **विद्यानंदि**प्रभो त्वयार्हतधर्मः प्रभावितः । भूपितश्च श्रवणवेलगुलनगरस्थजैनसंघः कनकवसनादिप्रदापनतः । विधाय च **गेरसप्पा**नगरासन्नमुनिसंदोहसंघं स्वशिष्यमंडलं स विभूषितः । **गौतमभद्रबाहुविशाखाचार्योमास्वामिसमंतभद्राकलंकादि** विद्वान्सो विजयंता भुवि **सामंतभद्रभाष्य**मंगलाचरणदे**वागमो**परि विरचितं भाष्यं **श्रीमदकलंकदेवेन** । समजसतयाप्त**मीमांसा**ग्रंथविबोधयित्रे **श्रीमद्विद्यानंदिने** नमः । **श्लोकवार्तिक**प्रणेता कविचूडामणिः तार्किकसिंहो विद्वान् यति**र्विद्यानंदी** चिरंजीयाद्भुवि धरणीधरसन्निकृष्टोग्रतपस्वी ध्यानी मुनिः **पात्रकेसर्येव** समजनिष्ट नान्यः । ४६ तमः शिलालेखः ।

इतोऽधिकमिदमपि विमर्शणीयं यत् (यथा समयनिर्णीतौ सत्यां विज्ञाप्येत पुरस्तात्) **अकलंकविद्यानंदिस्वामिनौ** समकालीनावेव समजनिपातां ॥ श्रीमदकलंकदेवकरविरचिताष्टशत्यभिधग्रंथस्योपरि भाष्यं च वरीवर्ति **श्रीमद्विद्यानंदि**विरचिता**ष्टसहस्र्याख्यं** । यद्ययं महात्मा मागधएव भवेत् दाक्षिणात्यः कर्णाटिकोवा न स्यात् तदा नैवं सम्भाव्येत यदष्टशत्युपर्यचिरकालएवैतस्य महात्मनो**ष्टसहस्र्याख्यं** भाष्यं स्यात् किं तु दाक्षिणात्यत्वे कार्णाटिकत्व एववैतस्य महात्मनस्तथाविधा संभावना । निश्चयेन त्विदमेवावसीयेत यदयं विद्यानंदी विभुःअकलंकदेवशिष्यकल्पसहचर एवाभूत्तत एवानेनाविलंवितकाल एव तथाविधम**ष्टशत्युपर्यष्टसहस्र्य**मिधं भाष्यं व्यरचि ।

विभुरयं विद्यानंदी प्राङ्मागधः पश्चात् वादकंडूयनवशंवदात्मतया दक्षिणं कर्णाटकं वा देशं सनाथीकृतवान् इत्यपि बलवती समावना भवितुमर्हत्यतो मागधो नासीदय प्रभुर्दाक्षिणात्यः कार्णाटिक एव वेत्यत्रापि न किमप्यनवद्यं गमकं । नात्रापि किमपि बलवत्तरं गमकं **कथाकोश**लेखमुज्झित्वा यदयं महात्मा मागधएवासीदिति । वस्तुतस्तु कथाकोशलेखोऽपि न प्रमाणपदमधिरोहति जनश्रुतिकुक्षिप्रविष्टत्वात्तल्लेखस्य । यतो येन ग्रंथकर्त्रा पात्रकेसरिकथा विलिखिता स समजनि शतसप्तकवर्षाणां पश्चात् श्रीविद्यानंदिप्रभोः, सा च कथा जैनधर्मप्रभावनां लक्ष्यीकृत्यैव किंवदंत्या विलिखिता नेतिहासदृष्ट्या (यदि भवेदितिहासदृष्ट्या कथं नोल्लिखितस्तेन श्रीविद्यानंदिसंवत्सरादिनिर्णयः) अतो श्रीमद्विद्यानंदिप्रभोर्मगधदेशस्थितिनिर्णये नेयं विलिखिता कथा प्रमाणपदमञ्चति ततोयं विद्यानंदी महात्मा मागधो दाक्षिणात्यः कार्णाटिको वेति विषयः सर्वथा संशयापन्नएवेति ॥

## समयविचारः ।

विभुरयं महात्मा विद्यानंदी कदा पावनात्मीयजीवनेन भारतभूमिं कामयांचक्रे इति न निर्णिन्येयं महोदयः कतमेऽपि स्वकरकलितग्रंथे । परंतु निश्चीयते कियद्भिः प्रमाणैर्यदयं प्रभुः ८ तमायाः खीष्टाब्देरतेः आदौ च ९ तमायाः शताब्देः समजनिष्ट ।

तानि चेमानि कियंति चित्प्रमाणानि ।

स्वकरविलसिताष्टसहस्र्याख्यग्रंथे **श्रीमद्विद्यानंदिप्रभुणा** **भर्तृहरिरचितवाक्यपदीयग्रंथस्य** पद्यमिदमुद्धृतं ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितं ॥ इति ।

श्रीमद्भर्तृहरिविदुषः पात्रकेसर्युपाधिविभूषितश्रीमत्पात्रकेसरिप्रमुखविद्वद्भिः समयश्च ६५० तमखीष्टाब्दासन्नेऽवसितः ।

किं च चीनदेशनिवासी कश्चित् हुएनसंगाभिधः पुरुषः ६२९ तमे खीष्टाब्दे विविधदेशसंदोहं विलोकयन् भ्रमन् भारतेऽयासीत् अवात्सीच ६४५ तमखीष्टाब्दपर्यंत भारते, तेनापि स्वप्रवासोल्लेखे विलिखितः । यत् "संप्रति व्याकरणशास्त्रवैदुष्ये भर्तृहरेर्विदुषो महती विश्रुतिः" अतो निश्चीयते श्रीमद्विद्यानंदिप्रभुः ६५० तमखीष्टाब्दानंतरमभूत् ॥

स्वरचिताष्टसहस्र्यभिधे महति ग्रंथे श्रीमद्विद्यानंदिप्रभुणा प्रख्यातवेदांतिविद्वत्कुमारिलभट्टस्य भट्टपदेनोल्लेखः कृतः प्रेत्याभ्यासश्च पदे २ तत्सिद्धांतः । कुमारिलभट्टसमयश्च ७०० तमखीष्टाब्दात् ७६० तमखीष्टाब्दपर्यंतं विनिर्णीतः अतस्ततोऽप्यनुमीयते विभुर्विद्यानंदी तत्समकालीनस्तदचिरकालानंतरं वा समजनीति ।

सुरेश्वरेत्यपराभिधा मंडनमिश्रस्यैवासीदिति विद्विलासकृतशंकरदिग्विजयतो विज्ञायते । स च सुरेश्वरोऽतेवास्यासीत् प्रथमशंकराचार्यस्येति निश्चितमेव । आद्यशंकराचार्यस्य कालश्च ७८० तमखीष्टाब्दात् ८१८ तमखीष्टाब्दपर्यंतं निश्चितः अतः सुरेश्वरस्य मंडनमिश्रस्य चायमेवकालइति मंतव्यं । मंडनमिश्रविहितोऽस्ति कश्चिद्बृहदारण्यकाभिधोग्रंथस्तत्तृतीयाध्यायात्समुद्धृता किलेमे निम्नलिखितश्लोकाः श्रीमद्विद्यानंदिप्रभुणा प्रत्याख्यातश्च मिश्रसिद्धांतः । तदुक्तं बृहदारण्यवार्तिके—

आत्मापि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितं । ब्रह्मापि स तथैवात्मा सद्वितीयतयेक्ष्यते ॥ १ ॥
आत्मा ब्रह्मेति पारोक्ष्यसद्वितीयत्वबाधनात् । पुमर्थे निश्चितं शास्त्रमिति सिद्धं समीहितं ॥ २ ॥
त्वत्पक्षे बहुकस्य स्यात्सर्वं ज्ञानविरोधि च । कल्प्या विरैव मत्पक्षे साक्ष्यानुभवसंश्रये ॥ ३ ॥

इति कश्चित् सोऽपि न प्रेक्षावान् ।

यथा विद्यावदिष्टं चेमनु दोषो महानयं निरवद्ये च विद्याया आनर्थक्यं प्रसज्यते ॥ १ ॥

अमुना प्रमाणबलेनापि श्रीमद्विद्यानंदिसमयो मंडनमिश्रसन्निकटे अर्थात् ८१८ तमखीष्टाब्दपर्यंतमेव निश्चेतुं पार्यते ।

अष्टसहस्रीपत्रपरीक्षयोः श्रीमद्विद्यानंदिना विश्रुतबौद्धविद्वद्धर्मकीर्तेरप्युल्लेखः कृतः अजनिष्ट यंश्च प्रायः सप्ततमायां शताब्दौ । उल्लेखश्च स हीत्थं—

यदुक्तं धर्मकीर्तिना—

अतद्रूपं परावृत्तवस्तुमात्रप्रवेदनात् । सामान्यविषयं प्रोक्तं लिंगं भेदाप्रतिष्ठितेः ॥ १ ॥
अर्थोपयोगेऽपि पुनः स्मार्तं शब्दानुयोजनं । अक्षधीर्यद्यपेक्षेत सोऽर्थो व्यवहितो भवेत् ॥ २ ॥

किं चाष्टसहस्र्यां दिग्नागोद्योतकरप्रभाकर (प्रज्ञाकर) प्रवरस्याभिधविविधविदुषामपि समुल्लेखः कृतः श्रीमद्विद्यानंदिप्रभुणा ।

आदिपुराणप्रणेत्रा भगवज्जिनसेनाचार्येणापि स्वकरविलसितादिपुराणे पात्रकेसर्यभिधया श्रीमद्विद्यानंदिप्रभुः स्तुतः तथथा—

भट्टाकलंकश्रीपालपात्रकेसरिणां गुणाः । विदुषां हृदयारूढा हारायंतेऽतिनिर्मलाः ॥

---

१ भावना यदि वाक्यार्थो नियोगो नेति का प्रमा । तावुभौ यदि वाक्यार्थौ हतौ भट्टप्रभाकरौ ॥
कार्येऽर्थे चोदनाज्ञानं स्वरूपे किं न तत्प्रमा । द्वयोश्चेद्धंत तौ नष्टौ भट्टवेदांतवादिनौ ॥ अष्टशती ।

२ निर्णयसागर आम्बेरायसब्यपाठिपालिकाशास्त्रीमसुममालासु प्रकाशित ११३ ।

३ यत्परीक्षायां धर्मकीर्तेः श्लोकद्वयोल्लेखः

आदिपुराणे प्रथमंपर्वणि ।

७६० तमशकसंवत्सरात् ७७० तमशकसंवत्सरमध्ये विरचितः किलादिपुराण. श्रीमद्भगवज्जिनसेनाचार्यैरित्यस्त्येकविधया [1]निश्चितिः. अतोनुमीयते यत् ७६० तमशकसंवत्सरस्य अर्थात् ८३८ तमखीष्टाब्दस्य सांनिध्ये व्यस्तारीत् कीर्तिवल्ली श्रीमद्विद्यानंदिप्रभोः ।

श्रीमदकलंकविवृतां समंतभद्रोक्तमत्र संक्षेपात् । परमागमार्थविषयामष्टसहस्रीं प्रकाशयति ॥ १ ॥

इत्यष्टसहस्या दशमाध्यायस्यानेनपद्येन श्रीमद्विद्यानंदिनाष्टशतीकर्तुः श्रीमदकलंकदेवस्योल्लेखः कृतः ।

परीक्षामुखप्रणेता **श्रीमन्माणिक्यनंदिविभुः**, निम्नलिखितपद्येन श्रीमदकलंकदेवविद्यानंदिनौ सस्मार ।

सिद्धं सर्वजनप्रबोधजननं सद्योऽकलंकाश्रयं विद्यानंदसमंतभद्रगुणतो नित्यं मनोनंदनं ।
निर्दोषं परमागमार्थविषयं प्रोक्तं प्रमालक्षणं युक्त्या चेतसि चिंतयंतु सुधियः श्रीवर्द्धमानं जिनं ॥१॥

प्रथमाध्यायः ।

एवं **श्रीमत्प्रभाचन्द्रेरपि** श्रीमन्माणिक्यनंदिकररचितपरीक्षामुखभाष्यभूतप्रमेयकमलमार्तंडेऽनेकत्र श्रीविद्यानंदिनां समुल्लेखः कृतः तैरेव च स्वरचितश्रीन्यायकुमुदचंद्रोदये श्रीमद्भट्टाकलंकदेवस्याप्यनेनपद्येन समुल्लेखो विहितः ।

बोधः कोप्यसमः समस्तविषयं प्राप्याकलंकं पदं जातस्तेन समस्तवस्तुविषय व्याख्यायते तत्पदं ।
किं न श्रीगणभृज्जिनेंद्रपदतः प्राप्तप्रभावः स्वयं व्याख्यात्यप्रतिम वचो जिनपतेः सर्वात्मभाषात्मकं ॥

एवं **श्रीमज्जिनसेनाचार्यैरपि** अकलंकप्रभाचंद्रपात्रकेसरीतित्रयाणां विदुषामादिपुराणप्रारंभे संस्मृतिर्विहिता । इमे सर्वे विद्वच्छिरोमणयः समकालीना एवेति निर्धार्यतेऽस्माभिः प्रतिपादितोल्लेखसमष्ट्या । क्रमश्चैषां **अकलंकः, विद्यानंदी, माणिक्यनंदी, प्रभाचंद्रः जिनसेन** इत्येवं पर्यवस्यते । आदिपुराणनिर्माणानेहसि सर्वेषां खल्वमीषां विदुषां कीर्तिलताः, भूमंडले वितस्तारित्यप्यभिमतिः । श्रीमदकलंकदेवैः कुत्रापि विद्यानंद्याद्याचार्योल्लेखस्यांशस्याप्यकरणात् सर्वतः प्राक्त्वकलंकएव संप्रत्यपादि अभूच्चैतस्मायेव महनीयत्व सौभाग्यावाप्तिर्निखिलेष्वेष्विति प्रतीयते । समयश्चैतस्य महनीयस्य, राष्ट्रकूटवंशीयसाहस्तुंग (शुभतुंग) नरपतिपरिषदि निम्नलिखितपद्यस्य प्रतिपादनात् अष्टमशताब्दाविवाङ्कीकृतः । श्रवणबेलगुलमल्लिषेणप्रशस्तौ विलिखितं चैतत्पद्यं ।

राजन् साहसतुंग संति बहवः श्वेतातपत्रा नृपाः किंतु त्वत्सदृशो रणे विजयिनस्त्यागोन्नता दुर्लभाः ।
तद्वत्संति बुधा न संति कवयो वागीश्वरा वाग्मिनो । नानाशास्त्रविचारचातुरधियः काले कलौ मद्विधाः ॥

भूपति**श्रीसाहसतुंग**महोदयः **कृष्णराजा**भिख्ययापि भुवि समुपालेभे विश्रुतिं । नरपतिरयं ७५२–७७५ तमे खीष्टाब्दे समजनिष्टेति दाक्षिणेतिहासे **श्रीडाक्टरभांडार**करमहोदयैः पर्यवसितमित्यतोऽपि निर्धार्यते श्रीमदकलंकदेवास्तित्वमष्टमशताब्दौ तदुत्तरार्धे वा प्रतिपद्यमानमलंमकार्षीद्भारत वर्षं निस्संशयं । तथा **बोधःकोपी**त्युपरिसमुद्बोधितपद्यतोप्येव प्रतीयते यदभूच्छ्रीमत्**प्रभाचंद्रः श्रीमद्भट्टाकलं**कान्तेवासी

---

१ विलोकयतु जैनमित्रकार्यालयबंबईद्वाराप्रकाशितविद्वद्रत्नमालायां जिनसेनगुणभद्राचार्यशीर्षकनिबंधे ।

२ ताडपत्रोपरिलिखितैका प्रतिमूर्तिरस्य ग्रंथस्य श्रवणबेलगुलमठे विद्यते ।

३ चंद्रांशुशुभ्रयशसं प्रभाचंद्रकविं स्तुवे । कृत्वा चंद्रोदयं येन शश्वदाह्लादितं जगत् ॥४७॥

४ स्वकरविलसितप्रमेयकमलमार्तंडग्रंथावसाने निम्नलिखितपद्याभ्यां श्रीमत्प्रभाचंद्राचार्यैः श्रीमत्पद्मनंदिरत्ननंदिनौ स्वगुरू ख्यापितौ अतोनुमीयते यदयं महात्मा प्रभाचंद्रः प्राक् श्रीमदकलंकदेवचरणसान्निध्यमुपेत्य चाधीत्य विद्यां जग्राह श्रीमत्पद्मनंदिरत्ननंदिनोरासन्ने, आर्हतीं दीक्षां । ततः समजनिषातामेतन्महात्मनो दीक्षागुरू श्रीपद्मरत्ननंदिनौ अथवा पूर्वमकलंकदेवचरणसांनिध्ये विद्यामधीत्य पश्चादनयोः पार्श्वेऽध्यैष्टेत्यतोऽपि तयोरेतन्महात्मनोगुरुत्वमवगम्यते ॥

समुपादाय श्रीमदकलङ्कचरणपंकेरुहपरागप्रभावत एव जगत्सर्वर्यवैदुष्य ॥ प्रभाचंद्रेणाकृत स्वकरविलसितग्रंथे श्रीमद्विद्यानंदिसमुल्लेखस्ततोनिर्धार्यते श्रीमदकलङ्कप्रभाचंद्रयोरन्तर एव समय श्रीमद्विद्यानंदास्तित्वस्य। एवं ७१३ समखीष्टाब्दात् (नरपतिकृष्णराजराज्यप्रारंभत ) ८१८ समादिपुराणविनिर्णीतसमयान्तरे, श्रीमदकलङ्कविद्यानंदिप्रभृतिविदुषामवसीयते काल ।

यदा विरचित श्रीमत्प्रथमजिनसेनैर्हरिवंशपुराणो न तावदुपालेभिरे श्रीमदकलंकविद्यानंदिप्रभृतिसूरिणो भुवि विश्रुतिं । अथवा न व्यरचयिषतेमे तावदष्टशत्यष्टसहस्र्यादिप्रसिद्धग्रंथान् । यतो हि हरिवंशपुराणप्रारंभे स्वपूर्वकालीनसिद्धसेनसमतभद्रदेवनन्द्याद्याचार्यान् स्तुवत, कुर्वतश्च स्तवनं तदात्वे यत्किंचिद्ग्रंथरचनानिर्माणकृताभ्यासस्य श्रीमद्द्वितीयजिनसेनस्य, नाकलङ्कविद्यानंदिप्रभृतयो विद्वान्स स्तुतिपथमगु श्रीमत्प्रथमजिनसेनस्येत्यतोप्यनुमीयते यद्यदीमौ श्रीमदकलङ्कविद्यानंदिनौ श्रीमत्प्रथमजिनसेनसमये ग्रंथकर्तारौ प्राभूतां तदा हरिवंशपुराणप्रारम्भे नियत स्तुतिभाजनतामुपालेभाते । हरिवंशपुराणनिर्माणसमयश्च ७८४ तमे खीष्टाब्दे । ततोऽकलङ्कविद्यानंदिनो विशेषविश्रुतिसमयो ग्रंथप्रणेतृत्वसमयश्च ७८४ तमखीष्टाब्दानंतरमेव निर्धारणीयं ।

मदृहरिकुमारिकेविलसितकरविलसिते निषधग्रंथे प्रोफेसरश्रीमत्पाठकै । इंडियनमेडिकजर्नानि-

---

गुरु श्रीमदमाणिक्यो नंदिताशेषसज्जन । नंदताद्दुरितैकांतरजो जैनमतार्णव ॥ १ ॥

श्रीपद्मनंदिसैद्धांतशिष्योऽनेकगुणाढ्य । प्रभाचन्द्रश्चिरं जीयाद्रत्ननंदिपदे रत ॥ २ ॥

२ इति श्रीभोजदेवराज्ये श्रीमद्धारानिवासिना परमपरमेष्ठिप्रणामार्जितामलपुण्यनिराकृतकर्ममलकलङ्केन श्रीमत्प्रभाचन्द्रपंडितेन निखिलप्रमाणप्रमेयस्वरूपोद्योतपरीक्षामुखपदं विवृतमिति प्रमेयकमलमार्तण्डप्रशस्तौ विलसितमित्यतो निर्धार्यते यदमूदयं प्रमेयकमलमार्तण्डकर्ता श्रीमत्प्रभाचंद्रो धाराधीशश्रीमद्भोजराजास्तित्वसमये । कालश्चैतन्नरपते १०२२ तमखीष्टाब्दात् १०५१ समखीष्टाब्दांत निर्धारित काले ऽस्मिन्नेव शशास च भूपतिर्भुवि । अतएव न्यायकुमुदचन्द्रोदयप्रणेतृत्व पृथगयं प्रभाचंद्रः समजनीत्यनुमीयते ॥ यत —

चंद्रांशुशुभ्रयशसं प्रभाचंद्रकविं स्तुवे । कृत्वा चंद्रोदयं येन शश्वदाल्हादितं जगत् ॥

श्रीमज्जिनसेनाचार्यैरमुना पद्येन चंद्रोदयप्रणेतु, आदिपुराणे स्तुतिरकृत निर्माणसमयश्चादिपुराणस्य ८१८ तमखीष्टाब्दसान्निध्ये परन्तु नाथन्यनुमानमिदं प्रमाणपदं प्रमेयकमलमार्तण्डन्यायकुमुदचंद्रोदययोरेकस्यैव कर्तुर्निर्धारणात् मार्तण्डचन्द्रोदययोरेकएव कर्तेति चंद्रोदयप्रारंभलिखितपद्येनानेन सर्वथा स्पष्टीभवति ।

माणिक्यनंदिपदमप्रतिमप्रबोध व्याख्याय बोधनिधिरेष पुन प्रबंध ।

प्रारभ्यते सकलसिद्धिविधौ समर्थे मूले प्रकाशितजगत्त्रयवस्तुसार्थे ॥

इत्यतो विज्ञायते यदयमखीष्टाब्दो द्वाभोजेत्यपराभिधां दधानोऽपरभोज एवाजनिष्ट धारापुर्यां ।

द्वितीयभोजकालीनोभूत्कविरप्रभाचंद्र प्राज्ञवर इत्यत्र प्रमेयकमलमार्तण्डभूमिकोल्लेखनसमये प्रादर्शि प्रमाणमिदं विद्वद्वरश्रीमत्पण्डितवंशीधरशास्त्रिभि यत् प्रमेयकमलमार्तण्डे श्रीमन्नेमिचंद्रसैद्धांतिकचक्रवर्तिविरचिता समुद्धृता कियत्यो गाथा । नेमिचंद्रसिद्धांतचक्रवर्ती च १००० तमे श्रीमदमरपतिचामुंडरायास्तित्वसमये तत्समयसांनिध्ये वा समुदपादि । कन्नडचामुण्डरायपुराणे श्रीमच्चामुंडरायनरपतिना (८९९ तमे खीष्टाब्दसमये, उत्तरपुराणप्रणेता) श्रीमद्गुणभद्रस्वामी प्रास्तुत । उत्पत्तिश्च श्रीमच्चामुंडरायभूपते ९७८ तमे खीष्टाब्दे समजनिष्टेत्यत, १००० तमे खीष्टाब्दे श्रीमच्चामुंडरायास्तित्वममूदित्यत्र न कापि संशीति । परन्तु प्रमेयकमलमार्तण्डसमुद्धृतगाथा न श्रीमन्नेमिचंद्रस्वामिस्वकरविलसिता किंतु परंपरागताएव प्रमेयकमलमार्तण्डवन्नेमिचंद्रैरपि स्वकरविलसितग्रंथसरोहे ता समुद्धृता, अत प्रमेयकमलमार्तण्डचंद्रोदयरचयिता प्रभाचंद्र एक एव भुवि समुदपादि न्यायवि च मार्तण्डामरं चंद्रोदय स इति प्रदीयान् प्रत्यय ।

काभिधे ग्रंथे। एम. ए. इत्यादिविविधपदविभूषितकालिकताकालेजाधिष्ठातृमहोमहापाध्यायश्रीशतीशचंद्र विद्याभूषणैश्च स्याद्वादपतिश्रीमद्विद्यानंदास्तित्वसमयः ८०० तमख्रीष्टाब्दसान्निध्य एव विनिर्धारितः।

अतः प्रमाणपरिपाट्यानयाऽष्टमशताब्दस्य शेषार्द्धः प्रारंभश्च नवमशताब्दस्येति यथाविधः समयोऽस्माभिः पूर्वं विज्ञापितः सएव श्रीविद्यानंदस्वाम्यस्तित्वसमयः प्रमाणपदमधिरोहति न तत्र कापि संशीतिः। समजनि खल्वयं समयो दाक्षिणे कार्णाटिके वेतिहासेऽतीवमहत्वस्य धर्मक्रांतिश्चाभून्महती किल भुवि समयेऽस्मिन्।

जैनवैदिकबौद्धधर्मधुरंधरविद्वान्सः समुपालेभिरेऽस्तित्वमेतस्मिन्नेवावसरे, आसीन्न्यायशास्त्रमेतर्ह्येवत्युन्नतिपराकाष्ठामापन्नं व्यधत्त किलैतत्कालीनविद्वत्परिकरेण न्यायशास्त्रपथा स्वमतसत्यताविर्भावाय भूयान् प्रयासः समजनिषत च तदात्वे वादविवादशास्त्रार्थाः अवसाने किमजनि धार्मिकविवादफलं, विजयं च क स्तेषु समुपादात्, विजयश्च सहि वैदुष्येण कारणांतरेण वाभूदित्यवशिष्टं वरीवार्तीनिहासज्ञानां परीक्षणाय। परंतु नात्र संशीतिर्यद्विवादास्तित्वकाले दिगंबरजैनसंप्रदायनिकेतनस्तंभायमानश्रीमदकलंकविद्यानंदादिदिग्विजयिविदुषां दर्शनसौभाग्यं नाभूद्बाहुल्येन सर्वेषां।

## ग्रंथरचना।

दार्शनिको नैयायिकश्च समजनि श्रीमद्विद्यानंदिप्रभुरिति पूर्वं प्रतिपादितमतएवैष महात्मा विषयद्वयएवास्मिन् ग्रंथान् व्यरचि एतन्महोदयवैदुष्यमार्तंडप्रखरमयूखायमानः, **आप्तमीमांसालंकारदेवालंकृतीत्य** परनामभाक् विश्रुतग्रंथोऽ**ष्टसहस्र्याभिधः**। श्रीमदुमास्वामिविरचिततत्त्वार्थसूत्रस्योपरि विद्यते गंधहस्तिमहाभाष्यं। तत्प्रारंभे पंचदशाधिकशतपद्यविनिर्मिता**प्तमीमांसाख्यं देवागमस्तोत्राभिधं** वा मंगलाचरणं। तदुपरि श्रीमदकलंकदेवरचिताष्टशत्यभिधो ग्रंथस्तद्भाष्यभूतएवायमष्टसहस्र्याभिधो महान् ग्रंथः। अपरश्चैतस्य महात्मनो जैनदर्शनग्रंथतत्त्वार्थसूत्रोपरि **श्लोकवार्तिकाभिधं**[1] भाष्यं तृतीयश्च सामंतभद्र**युक्त्यनुशासन**टीकाग्रंथः। **आप्तपरीक्षा**पि विश्रुतग्रंथोस्य महोदयस्य। सतीष्वपि भूयसीषु तद्ग्रंथटीकासु, एतन्महोदयकरविलसिताप्यात परीक्षालंकृतीत्यपराभिधा टीकाप्तपरीक्षायाः। ग्रंथचतुष्टयादस्मात् **पत्रपरीक्षाप्रमाणपरीक्षाप्रमाणमीमांसाप्रमाणनिर्णयविद्यानंदमहोदयबुद्धेशभवनव्याख्यान**प्रभृतयोनेके ग्रंथा महात्मैतद्वैदुष्यविलसिताः संन्ति भुवि इति समाप्यतेऽयं निबंधोविद्यायपत्रपरीक्षा मंगलाचरणं।

जीयान्निरस्तनिःशेषसर्वथैकांतशासनं। सदा श्रीवर्द्धमानस्य शासनं जिनशासनं ॥ ४ ॥*

विदुषामनुचरो

**गजाधरलालोजैनः।**

---

१ श्लोकवार्तिकं लक्ष्यीकृत्य विलिखितं श्रीमद्वादिराजसूरिणा पार्श्वनाथचरिते।

ऋजुसूत्रं स्फुरद्रत्नं विद्यानंदस्य विस्मयः। शृण्वतामप्यलंकारं दीप्तिरंगेषु रंगति ॥

२ मैसूरकुर्गेतिपत्तनद्वयशिलालेखाभिधे ग्रंथेऽपि मि. ल्युई राईसमहोदयैरेतद्ग्रंथनामोल्लिखितं।

३ यशोधरचरितकाव्यप्रस्तावनाशयमल्लिषेणप्रशस्तिनिम्नलिखितपद्यं समुद्धृत्य श्रीमत्पात्रकेसरिणां त्रिलक्षणकदर्थनाभिधोग्रंथः कल्पितः परंतु त्रिलक्षणकदर्थनाभिधानो नापरः कश्चिदपि ग्रंथः किंतु पार्श्वजिनेन्द्रफणोपरि श्रीमत्पात्रकेसर्येनुमानविषयकभ्रमनिराकरणाय यत् पद्य म्यलेखि श्रीमत्या पद्मावतीदेव्या तस्यैवात्र तात्पर्यं।

महिमा स पात्रकेसरिगुरोः परं भवति यस्य भक्त्यासीत् पद्मावती सहाया त्रिलक्षणकदर्थनं कर्तुं ॥ १ ॥

* सारांशभूतोयं निबंधः किल श्रीयुततात्यानेमिनाथपांगललिखितमहाराष्ट्रीयलेखस्य तत्र मूललेखकानेकविचारासम्मतत्वात् परिवर्तितोयं बहुशोस्माभिः संशुध्येतिहासिकपुस्तकान्तरात् स्वतश्च विचारबाहुल्यं समुद्बोधितं चात्रेति।



नमः सिद्धेभ्यः ।

# सनातनजैनग्रंथमाला ।

१.

आचार्यप्रवरश्रीविद्यानन्दिस्वामिविरचिता

# आप्तपरीक्षा ।

प्रबुद्धाशेषतत्त्वार्थबोधदीधितिमालिने ।
नमः श्रीजिनचंद्राय मोहध्वांतप्रभेदिने ॥

कस्मात्पुनः परमेष्ठिनः स्तोत्रं शास्त्रादौ शास्त्रकाराः प्राहुरित्यभिधीयते—

श्रेयोमार्गस्य संसिद्धिः प्रसादात्परमेष्ठिनः ।
इत्याहुस्तद्गुणस्तोत्रं शास्त्रादौ मुनिपुंगवाः ॥ २ ॥

श्रेयो निःश्रेयसं परमपरं च। तत्र परं सकलकर्मविप्रमोक्षलक्षणं बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्ष इति वचनात् । ततोऽपरमार्हन्त्यलक्षणं घातिकर्मक्षयादनन्तचतुष्टयस्वरूपलाभस्यापरनिःश्रेयसत्वात् । न चाऽत्र कस्यचिदात्मविशेषस्य कृत्स्नकर्मविप्रमोक्षोऽसिद्धः साधकप्रमाणसद्भावात् । तथाहि । कश्चिदात्मविशेषः कृत्स्नकर्मभिर्विप्रमुच्यते कृत्स्नबन्धहेत्वभावनिर्जरावत्त्वात् । यस्तु न कृत्स्नकर्मभिर्विप्रमुच्यते स न कृत्स्नबन्धहेत्वभावनिर्जरावान् यथा संसारी कृत्स्नबन्धहेत्वभावनिर्जरावांश्च कश्चिदात्मविशेषस्तस्मात्कृत्स्नकर्मभिर्विप्रमुच्यते । ननु बन्ध एवात्मनोऽसिद्धस्तद्धेतुरपि कुतो बन्धहेत्वभाववत्त्वं, प्रतिषेधस्य विधिपूर्वकत्वात् । बन्धाभावे च कस्य निर्जरा, बन्धफलानुभवनं हि निर्जरा बन्धाभावे तु कुतस्तत्फलानुभवनमतः कृत्स्नकर्मनिर्जरावत्त्वमप्यसिद्धं । न चासिद्धं साधनं साध्यसाधनायालमिति कश्चित्, सोऽप्यनालोचिततत्त्वः प्रमाणतो बंधस्य प्रसिद्धेः । तथा हि । विवादाध्यासितः संसारी, बंधवान्, परतन्त्रत्वादालानस्तंभागतहस्तिवत् । परतन्त्रोऽसौ हीनस्थानपरिग्रहवत्त्वात् कामोद्रेकपरतंत्रवेश्यागृहपरिग्रहवच्छ्रोत्रियब्राह्मणवत् । हीनस्थानं हि शरीरं तत्परिग्रहवांश्च संसारी प्रसिद्ध एव । कथं पुनः शरीरं हीनस्थानमात्मन इत्युच्यते । हीनस्थानं शरीरमात्मनो दुःखहेतुत्वात् कस्यचित्कारागृहवत् । ननु देवशरीरस्य दुःखहेतुत्वाभावात् पक्षाव्यापको हेतुरिति चेत् न । तस्यापि मरणे दुःखहेतुत्वसिद्धेः पक्षव्यापकत्वव्यवस्थानात् । तदेवं संक्षेपतो बन्धस्य प्रसिद्धौ तद्धेतुरपि सिद्धस्तस्याहेतुकस्य नित्यत्वप्रसंगात् । सतो हेतुरहितस्य नित्यत्वव्यवस्थितेः 'सदकारणवन्नित्यमिति' परैरभिधानात् । तद्धेतुश्च मिथ्यादर्शनाविरतिप्रमादकषाययोगविकल्पात्पञ्चविधः स्यात् । बंधो हि संक्षेपतो द्वेधा भावबंधो द्रव्यबन्धश्चेति । तत्र भावबंधः क्रोधाद्यात्मकस्तस्य हेतुर्मिथ्यादर्शनं, तद्भावे भावादभावे चाभावात् । कश्चित्क्रोधादिविषये हि क्रोधादिविषयत्वश्रद्धानं मिथ्यादर्शनं तस्य विपरीताभिनिवेश-

लक्षणस्य सकलास्तिकप्रसिद्धत्वात् तस्य च सद्भावे बहिरंगस्य सत्यंतरंगे द्रव्यक्रोधादिबंधे भावबंधस्य सद्भावः तदभावे चासद्भावः सिद्ध एवेति मिथ्यादर्शनहेतुको भावबंधः । तद्वदविरतिहेतुकश्च समुत्पन्न-सम्यग्दर्शनस्यापि कस्यचिदप्रकृष्टो भावबंधः सत्यामविरतौ प्रतीयत एव ततोऽप्यप्रकृष्टो भावबंधः। प्रमादहेतुकः स्याद्विरत्यभावेऽपि, कस्यचिद्विरतस्य सति प्रमादे तदुपलब्धेः ततोऽप्यप्रकृष्टः । कषायहे-तुकः सम्यग्दृष्टेर्विरतस्याप्रमत्तस्यापि कषायसद्भावे भावात् । ततोऽप्यप्रकृष्टतमपुण्यज्ञानलक्षणो भावबंधो योगहेतुकः क्षीणकषायस्यापि योगसद्भावे तत्सद्भावात् । केवलिनस्तु योगसद्भावेऽपि न भावबंधः, तस्य जीवन्मुक्तत्वान्मोक्षप्रसिद्धेः । न चैवमेकैकहेतुक एव बंधः पूर्वस्मिन् पूर्वस्मिन्नुत्तरस्योत्तरस्य बंधहेतोः सद्भावात् । कषायहेतुको हि बंधो योगहेतुकोऽपि प्रमादहेतुकश्च योगकषायहेतुकोऽपि । अविरतिहेतुकश्च योगकषायप्रमादहेतुकः प्रतीयते । मिथ्यादर्शनहेतुकश्च योगकषायप्रमादाविरतिहेतुकः सिद्ध इति मिथ्यादर्शनादिपंचविधप्रत्ययसामर्थ्यान्मिथ्याज्ञानस्य बंधहेतोः प्रसिद्धेः षट्प्रत्ययोऽपि बंधोऽभिधीयते । न चायं भावबंधो द्रव्यबंधमंतरेण भवति, मुक्तस्यापि तत्प्रसंगादिति द्रव्यबंधः सिद्धः । सोऽपि मिथ्यादर्शनाविरतिप्रमादकषाययोगहेतुक एव बंधत्वाद्भावबंधवदिति मिथ्यादर्शनादि-बंधहेतुः सिद्धः । तदभावः कुतः सिद्ध इति चेत् तत्प्रतिपक्षभूतसम्यग्दर्शनादिसात्मीभावात् । सति हि सम्यग्दर्शने मिथ्यादर्शनं निवर्तते तद्विरुद्धत्वात् । यथोष्णस्पर्शे सति शीतस्पर्श इति प्रतीतं । तथैवा-ऽविरतिर्विरत्यां सत्यामपैति । प्रमादश्चाप्रमादपरिणतौ कषायोऽकषायतायां योगश्चायोगतायामिति बंधहेत्वभावः सिद्धोऽपूर्वकर्मणां आस्रवनिरोधः संवरः, इति वचनात् । ननु च स गुप्तिसमितिधर्मा-नुप्रेक्षापरीषहजयचारित्रैर्भवतीति सूत्रकारमतं न पुनः सम्यग्दर्शनादिभ्य इति न मंतव्यं । गुप्त्यादीनां सम्यग्दर्शनाद्यात्मकत्वात् । न हि सम्यग्दर्शनरहिता गुप्त्यादयः संति सम्यग्ज्ञानरहिता वा तेषामपि विरत्यादिरूपत्वात् । चारित्रभेदा एव प्रमादरहिताः कषायरहिताश्चायोगतामपि लभंते । ततो न कश्चिद्दोषः । कथमात्मनः पूर्वोपात्तकर्मणां निर्जरा सिद्धेदित्यभिधीयते । क्वचिदात्मनि कार्त्स्न्यतः पूर्वोपात्तानि कर्माणि निर्जीर्यंते तेषां विपाकांतत्वात् । यानि तु न निर्जीर्यंते तानि न विपाकांतानि यथा कालादीनि, विपाकांतानि च कर्माणि तस्मान्निर्जीर्यंते । विपाकांतत्वं नासिद्धं कर्मणां । तथा हि विपाकांतानि कर्माणि फलावसानत्वाद्व्रीह्यादिवत् । तेषामन्यथा नित्यत्वानुषंगात् । न च नित्यानि कर्माणि नित्यं तत्फलानुभवनप्रसंगात् । तत्र चात्मविशेषे अनागतकर्मबंधहेत्वभावादपूर्वकर्मानुत्पत्तिस्तत्र पूर्वोपात्तकर्मणां यथाकालमुपक्रमाच्च फलदानात्कार्त्स्न्येन निर्जरा प्रसिद्धैव । ततः कृत्स्नबंधहेत्वभाव-निर्जरावत्त्वं साधनं प्रसिद्धं कृत्स्नकर्मविप्रमोक्षं साधयत्येव । ततस्तल्लक्षणं परं निःश्रेयसं व्यवतिष्ठते । तथाऽर्हत्यलक्षणमपरं सुनिश्चितासंभवद्बाधकप्रमाणत्वात् सुखादिवदिति सर्वज्ञत्वसिद्धौ निर्णेष्यते । श्रेयसो मार्गः श्रेयोमार्गो निःश्रेयसोपायो वक्ष्यमाणलक्षणस्तस्य संसिद्धिः संप्राप्तिः सम्यग्ज्ञप्तिर्वा सा हि परमेष्ठिनः प्रसादाद्भवति मुनिपुंगवानां यस्मात्तस्मात्ते मुनिपुंगवाः सूत्रकारादयः शास्त्रस्यादौ तस्य परमेष्ठिनो गुणस्तोत्रमाहुरिति संबंधः । परमेष्ठी हि भगवान् परमोऽर्हन् तत्प्रसादात्परमागमार्थनिर्णयो-परस्य परमेष्ठिनो गणधरदेवादेः संपद्यते तस्माच्चापरपरमेष्ठिनः परमागमशब्दसंदर्भो द्वादशांग इति । परापरपरमेष्ठिभ्यां परमागमार्थशब्दशरीरसंसिद्धिस्तद्विनेयमुख्यानां तेभ्यश्च स्वशिष्याणामिति गुरुपूर्व-क्रमात्सूत्रकाराणां परमेष्ठिनः प्रसादात्प्रधानभूतपरमार्थस्य श्रेयोमार्गस्य संसिद्धिरभिधीयते । प्रसादः पुनः परमेष्ठिनस्तद्विनेयानां प्रसन्नमनोविषयत्वमेव वीतरागाणां तु तुष्टिलक्षणप्रसादासंभवात्कोपासंभववत् । तदाराधकजनैस्तु प्रसन्नेन मनसोपास्यमानो भगवान् प्रसन्न इत्यभिधीयते रसायनवत् । यथैव हि प्रसन्नेन मनसा रसायनमासेव्य तत्फलमवाप्नुवंतः संतो रसायनप्रसादादिदमस्माकमारोग्यादिफलं समुत्पन्नमिति प्रतिपद्यंते तथा प्रसन्नेन मनसा भगवंतं परमेष्ठिनमुपास्य तदुपासनफलं श्रेयोमार्गाधि-

गमलक्षणं प्रतिपद्यमानास्तद्विनेयजना भगवत्परमेष्ठिनः प्रसादादस्माकं श्रेयोमार्गाधिगमः सम्पन्न इति समनुमन्यते । ततः परमेष्ठिनः प्रसादात्सूत्रकाराणां श्रेयोमार्गस्य संसिद्धेर्युक्तं शास्त्रादौ परमेष्ठिगुण-स्तोत्रं । मंगलार्थं तदित्येके । तेऽप्येवं प्रष्टव्याः । किं साक्षान्मंगलार्थं परमेष्ठिगुणस्तोत्रं परंपरया वा । न तावत्साक्षात्तदनन्तरमेव मंगलप्रसंगात् । कस्यचिदपि मंगलानवाप्त्ययोगात् । परंपरया चेत् न किंचिदनिष्टं । परमेष्ठिगुणस्तोत्रादात्मविशुद्धिविशेषः प्रादुर्भवन् धर्मविशेषं स्तोतुः साधयत्येवाऽधर्म-प्रध्वंसं च । ततो मंगं सुखं समुत्पद्यत इति तद्गुणस्तोत्रं मंगलं मंगं लातीति मंगलमिति व्युत्पत्तेः । मलं गालयतीति मंगलमिति वा । मलस्याधर्मलक्षणस्य परंपरया तेन प्रध्वंसनात् । केवलं तत्साक्षा-दानजिनेन्द्रार्चनादिकमप्येवं मंगलमिति न तद्गुणस्तोत्रमेव मंगलमिति नियमः सिध्यति । स्यान्मतं मंगं श्रेयोमार्गसंप्राप्तिजनितं प्रशमसुखं तल्लात्यादत्ते परमेष्ठिगुणस्तोत्रात्तदाराधक इति मंगलं परमेष्ठि-गुणस्तोत्रं । मलं वा श्रेयोमार्गसंसिद्धौ विघ्ननिमित्तं पापं गालयतीति मंगलं श्रुतिरिति । तदेतदनुकूलं न परमेष्ठिगुणस्तोत्रस्य परममंगलत्वप्रतिष्ठानात् । तदुक्तं—

"आदौ मध्येऽवसाने च मंगलं भाषितं बुधैः । तज्जिनेन्द्रगुणस्तोत्रं तदविघ्नप्रसिद्धये" ॥

ननु चैवं भगवद्गुणस्तोत्रं स्वयं मंगलं न तु मंगलार्थमिति न मन्तव्यं । स्वयं मंगलस्यापि मंगलार्थत्वोपपत्तेः । यथा हि मलगालनलक्षणं मंगलं तदा सुखादानलक्षणमंगलाय प्रभवतीति सिद्धं मंगलार्थं । यदापि सुखादानलक्षणं तन्मंगलं तदा पापगालनलक्षणमंगलाय प्रभवतीति कथं न मंग-लार्थं । यदाप्येतदुभयलक्षणं मंगलं तदा तु मंगलान्तरापेक्षया मंगलार्थं बहुप्रकाराण्येव श्रेयस-प्राप्तेः परापरमंगलसंततिप्रसिद्धेरित्यलं विस्तरेण । शिष्टाचारपरिपालनार्थं नास्तिकतापरिहारार्थं निर्विघ्नतः शास्त्रपरिसमाप्त्यर्थं च परमेष्ठिगुणस्तोत्रमित्यन्ये । तेऽपि तदेव तथेति नियमयितुमसमर्था एव । तपश्चरणादेरपि तथात्वप्रसिद्धेः । न हि तपश्चरणादि शिष्टाचारपरिपालनाद्यर्थं न भवतीति शक्यं वक्तुं । यदि पुनरनियमेन भगवद्गुणस्तवनं शिष्टाचारपरिपालनाद्यर्थमभिधीयते तदा तदेव शास्त्रादौ शास्त्रकारैः कर्तव्यमिति नियमो न सिध्यति । न च क्वचित्तन्न क्रियते इति वाच्यं । तस्य शास्त्रे निबद्धस्यानिबद्धस्य वा वाचिकस्य मानसस्य वा विस्तरतः संक्षेपतो वा शास्त्रकारैरवश्यं करणात् । तदकरणे तेषां तत्कृतोपकारविस्मरणादसाधुत्वप्रसंगात् । साधूनां कृतस्योपकारस्याविस्म-रणप्रसिद्धेः । 'न हि कृतमुपकारं साधवो विस्मरन्ति' इति वचनात् । यदि पुनः स्वगुरोः संस्मरणपूर्वकं शास्त्रकरणमेवोपकारस्याविस्मरणमिति मतं । तदा सिद्धं परमेष्ठिगुणस्तोत्रं स्वगुरोरेव परमेष्ठित्वात् । तस्य गुरुत्वेन संस्मरणस्य तद्गुणस्तोत्रत्वसिद्धेरित्यलं विवादेन । किं पुनस्तत्परमेष्ठिनो गुणस्तोत्रं शास्त्रादौ सूत्रकाराः प्राहुरिति निगद्यते—

मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृतां । ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ॥ १ ॥

अत्र मोक्षमार्गादिपदानामर्थं पुरस्ताद्वक्ष्यते । वाक्यार्थस्तूच्यते । मोक्षमार्गस्य नेतारं कर्मभू-भृतां भेत्तारं विश्वतत्त्वानां ज्ञातारमहं वन्दे तद्गुणलब्ध्यर्थत्वात् । यो यद्गुणलब्ध्यर्थी स तं वन्दमानो दृष्टः । यथा शास्त्रविद्यादिगुणलब्ध्यर्थी शास्त्रविदं विदितं तत्प्रणेतारं च । तथा च कश्चिन्मोक्ष-मार्गप्रणेतृत्वकर्मभूभृद्भेतृत्वविश्वतत्त्वज्ञातृत्वगुणलब्ध्यर्थी । तस्मान्मोक्षमार्गस्य नेतारं कर्मभूभृतां भेत्तारं विश्वतत्त्वानां ज्ञातारं वन्दे इति शास्त्रकारः शास्त्रसमारंभे श्रोता तस्य व्याख्याता वा भगवंतं परमेष्ठिनं परमपरं च मोक्षमार्गप्रणेतृत्वादिभिर्गुणैः स्तौतीति । तत्प्रसादश्रेयोमार्गस्य संसिद्धेः समर्थ-नात् । किमर्थं पुनरिदं भगवतोऽसाधारणं विशेषणं मोक्षमार्गप्रणेतृत्वं कर्मभूभृद्भेतृत्वं विश्वतत्त्वज्ञा-तृत्वं चात्र प्रोक्तं भगवद्भिरित्याह—

**इत्यसाधारणं प्रोक्तं विशेषणमशेषतः ।**
**परसंकल्पिताप्तानां व्यवच्छेदप्रसिद्धये ॥ ३ ॥**

परैर्वैशेषिकादिभिः संकल्पिताः परसंकल्पितास्ते च ते आप्ताश्च परसंकल्पिताप्ता महेश्वरादयः तेषामशेषतो व्यवच्छेदप्रसिद्ध्यर्थं यथोक्तमसाधारणं विशेषणमाचार्यैः प्रोक्तमिति वाक्यार्थः । न हीदमीश्वरकपिलसुगतादिषु संभवति बाधकप्रमाणसद्भावात् । भगवत्यर्हत्येव तदसद्भावसाधनाद्वा-साधारणविशेषणमिति वक्ष्यामः । ननु चेश्वरादीनामप्याप्तत्वे किं दूषणं येन तद्व्यवच्छेदार्थमसाधारणं विशेषणं प्रोच्यते किं वान्ययोगव्यवच्छेदान्महात्मनि परमेष्ठिनि निश्चिते प्रतिष्ठितं स्यादित्यारेकायामिदमाह—

**अन्ययोगव्यवच्छेदान्निश्चिते हि महात्मनि ।**
**तस्योपदेशसामर्थ्यादनुष्ठानं प्रतिष्ठितं ॥ ४ ॥**

भवेदिति क्रियाध्याहारः । ननु चात्रान्येषामन्ययोगव्यवच्छेदाभावेऽपि भगवतः परमेष्ठिनस्तत्त्वोपदेशादनुष्ठानं प्रतिष्ठामियर्त्येव तेषामविरुद्धभाषित्वादिति चेत् न । परस्परविरुद्धसमयप्रणयनात् तत्त्वनिश्चयायोगात् तदन्यतमस्याप्युपदेशप्रामाण्यानिश्चयादनुष्ठानप्रतिष्ठानुपपत्तेः । ननु मोक्षोपायानुष्ठानोपदेशमात्रे नेश्वरादयो विप्रवदंते ततोऽर्हदुपदेशादिवेश्वराद्युपदेशादपि मानुष्ठानप्रतिष्ठानुपपन्ना यतस्तद्व्यवच्छेदेन परमेष्ठी निश्चीयत इति कश्चित् । सोऽपि न विशेषज्ञः सम्यग्मिथ्योपदेशविशेषाभावप्रसंगात् । स्यान्मतं । वैशेषिकैरभिमतस्याप्तस्य निःश्रेयसोपायानुष्ठानोपदेशस्तावत्समीचीन एव बाधकप्रमाणाभावात् । श्रद्धाविशेषोपगृहीतं हि सम्यग्ज्ञानं वैराग्यनिमित्तं परां काष्ठामापन्नमंत्यनिःश्रेयसहेतुरित्युपदेशः । तत्र श्रद्धाविशेषस्तावदुपादेयपूपादेयतया हेयेषु हेयतयैव श्रद्धानं । सम्यग्ज्ञानं पुनर्यथावस्थितार्थाधिगमलक्षणं, तद्धेतुकं च वैराग्यं रागद्वेषप्रक्षयः एतदनुष्ठानं च तद्भावनाभ्यासस्तस्यैतस्य निःश्रेयसोपायानुष्ठानस्योपदेशो न प्रत्यक्षेण बाध्यते । जीवन्मुक्तस्तत एव प्रत्यक्षतः केश्चित् (केषांचित्) स्वयं संवेदनात् । परैः संहर्षायासविमुक्तैरनुमीयमानत्वात् । जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यत इत्युपदेशाच्च नानुमानागमाभ्यां बाध्यते जीवन्मुक्तिवत् । परममुक्तेरप्यत एवानुष्ठानात् संभावनोपपत्तेः । नचान्यत्प्रमाणं बाधकं तदुपदेशस्य तद्विपरीतार्थव्यवस्थापकत्वाभावादिति । तदपि न विचारक्षमं । श्रद्धादिविशेषविषयाणां पदार्थानां यथावस्थितार्थत्वासंभवात् । द्रव्यादयो हि षट्पदार्थास्तावदुपादेयाः सदात्मानः प्रागभावादयश्चासदात्मानस्ते च यथा वैशेषिकैर्वर्ण्यते तथा न यथार्थतया व्यवतिष्ठंते तद्ग्राहकप्रमाणाभावात् । द्रव्यं हि गुणादिभ्यो भिन्नमेकं, गुणश्चेतरेभ्यो भिन्न एकः, कर्म चैकमितरेभ्यो भिन्नं, सामान्यं चैकं, विशेषश्चैकः पदार्थः समवायवत् यद्यभ्युपगम्यते तदा द्रव्यादयः षट्पदार्थाः सिद्ध्येयुः । न च द्रव्यपदस्यैकोऽर्थः परैरिष्यते गुणपदस्य कर्मपदस्य सामान्यपदस्य विशेषपदस्य च, यथा समवायपदस्यैकः समवायोऽर्थः इति कथं षट्पदार्थव्यवस्थितिः । स्यान्मतं । पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि द्रव्यपदस्यार्थ इति कथमेको द्रव्यपदार्थः ? सामान्यसंज्ञाभिधानादिति चेत् न । सामान्यसंज्ञायाः सामान्यविषयत्वात् । तदर्थस्य सामान्यपदार्थत्वे ततो विशेषेऽप्रवृत्तिप्रसंगात् । * द्रव्यपदार्थस्यैकस्यासिद्धेश्च । पृथिव्यादिषु हि द्रव्यमिति संज्ञा द्रव्यत्वसामान्यसंबंधनिमित्ता । तत्र द्रव्यत्वमेकं न द्रव्यं किंचिदेकमस्ति । द्रव्यलक्षणमेकमिति चेत् तत्किमिदानीं द्रव्यपदार्थोऽस्तु न चैतद्युक्तं लक्ष्यस्य द्रव्यस्याभावे तल्लक्षणानुपपत्तेः । पृथिव्यादीनि

* सामान्यरूप = द्रव्यपदार्थ —

कृत्वापि क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणं यदि प्रतिज्ञायते। तदानेकत्र द्रव्ये लक्षणं कथमेकमेव प्रयुज्यते तस्य प्रतिव्यक्तिभेदात्। न हि यदेव पृथिव्यां द्रव्यलक्षणं तदेवाबादिष्वस्ति तस्यासाधारणरूपत्वात्। यदि पुनर्द्रव्यलक्षणं पृथिव्यादीनां गुणादिभ्यो व्यवच्छेदकतया तावदसाधारणो धर्मः पृथिव्यादिषु नवस्वपि सद्भावात्साधारणः कथमन्यथातिव्याप्त्यव्याप्ती लक्षणस्य निराक्रियेते सकललक्ष्यव्यक्तिषु हि व्यापकस्य लक्षणस्याव्याप्तिपरिहारस्तदलक्ष्येभ्यो व्यावृत्तस्यातिव्याप्तिपरिहारः। स कथैर्लक्ष्यलक्षणभावैरभिधीयते नान्यथेति मतिः। तदापि नैको द्रव्यपदार्थः सिद्ध्येत्+द्रव्यलक्षणादन्यस्य लक्ष्यस्य द्रव्यस्यैकस्यासम्भवात्। यथापि पृथिव्यादीनि द्रव्याण्येकलक्षणयोगादेको द्रव्यपदार्थ इति मतं न। तथोपचारमात्रप्रसंगात्। पुरुषो यष्टिरिति यथा यष्टिसाहचर्याद्धि पुरुषो यष्टिरिति कथ्यते न पुनः स्वयं यष्टिरित्युपचारः प्रसिद्ध एव तथा पृथिव्यादिरनेकोऽपि स्वयमेकलक्षणयोगादेक उपचर्यते न तु स्वयमेक इत्यायातं। न च लक्षणमप्येकं पृथिव्यादिषु पंचसु क्रियावत्स्वेव क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणस्य भावात् निःक्रियेष्वाकाशकालदिगात्मसु क्रियावत्त्वस्याभावात्। गुणवत्समवायिकारणमित्येतावन्मात्रस्य ततोऽन्यस्य द्रव्यलक्षणस्य सद्भावात् लक्षणद्वयस्य प्रसिद्धेः। तथा च द्रव्यलक्षणद्वययोगात् द्वावेव द्रव्यपदार्थौ स्यातां। यदि पुनर्द्वयोरपि द्रव्यलक्षणयोर्द्रव्यलक्षणत्वाविशेषादेकं द्रव्यलक्षणमित्युच्यते तदापि किं तद्द्रव्यलक्षणयोर्द्रव्यलक्षणत्वमेकं न तावत्सामान्यं तस्य द्रव्यगुणकर्माश्रयत्वात्। न चैते द्रव्यलक्षणे। द्रव्ये स्वेष्टाविघातात्। नापि गुणौ। द्रव्याश्रयी अगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणाभावात्। प्रत्ययात्मकत्वात्तयोर्गुणत्वमिति चेत् न। प्रत्ययात्मनोर्लक्षणयोः पृथिव्यादिष्वसंभवात्। तयोस्तदसाधारणधर्मत्वात्समवायित्वेनाभिधानात्मनोर्द्रव्यलक्षणयोर्गुणत्वं प्रत्याख्यातं। नापि ते कर्मणी। परिस्पंदात्मकत्वाभावादेकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणस्याभावात्। तयोरेकद्रव्यत्वे नवविधत्वप्रसंगाद्द्रव्यलक्षणस्य कुतो द्वित्वमेकत्वं वा व्यवतिष्ठते। यतो द्रव्यलक्षणत्वमेकं तत्र प्रवर्तमानमेकत्वं व्यवस्थापयेत्सर्वोपचरितोपचारप्रसंगाच्च द्रव्यलक्षणत्वेनैकेन योगाद्द्रव्यलक्षणस्यैकत्वादेकं द्रव्यलक्षणं तेन चोपचरितेन द्रव्यलक्षणेनैकेन योगात्पृथिव्यादीन्येको द्रव्यपदार्थ इति कुतः पारमार्थिको द्रव्यपदार्थः कश्चिदेकः सिद्ध्येत्। यदप्यभ्यधायि वैशेषिकैः पृथिव्यादीनां नवानां द्रव्यत्वमेकेनाभिसंबंधात्करणमिति द्रव्यं नामकः पदार्थ इति तदपि न युक्तं। परमार्थतो द्रव्यपदार्थस्यैकस्यासिद्धेः तस्योपचारादेव प्रसिद्धेः। एतेन चतुर्विंशतिगुणानां गुणत्वेनैकेनाभिसंबंधादेको गुणपदार्थः, पंचानां च कर्मणां कर्मत्वेनैकेनाभिसंबंधादेकः कर्मपदार्थ इत्येतत्प्रत्याख्यातं। तथा चासत्यद्रव्यगुणकर्मपदार्थाव्यवस्थितेः कथं चैवं सामान्यपदार्थ एकः सिद्ध्येद्विशेषपदार्थो वा समवायपदार्थो वा। परापरसामान्ययोः सामान्यांतरेणैकेनाभिसंबंधायोगाद्विशेषाणां चेति समवाय एवैकः पदार्थः स्यात्। यदि पुनर्यथेहेदमिति प्रत्ययाविशेषाद्विशेषप्रत्ययाभावादेकः समवायः तथा द्रव्यमिति प्रत्ययाविशेषादेको द्रव्यपदार्थः स्यात् गुण इति प्रत्ययाविशेषाद्गुणपदार्थः कर्मेति प्रत्ययाविशेषात्कर्मपदार्थः सामान्यमिति प्रत्ययाविशेषात्सामान्यपदार्थः विशेष इति प्रत्ययाविशेषाद्विशेषपदार्थ इत्यभिधीयते, तथापि वैशेषिकतन्त्रव्याघातो दुःशक्यः परिहर्तुं स्याद्वादिमतस्यैव प्रसिद्धेः। स्याद्वादिनां हि शुद्धसंग्रहनयात्सत्प्रत्ययाविशेषाद्विशेषलिंगाभावादेकं सन्मात्रं तत्त्वं शुद्धं द्रव्यमिति मतं। तथैवाशुद्धसंग्रहनयादेकं द्रव्यमेको गुणादिरिति, व्यवहारनयात्तु यत्सत्तद् द्रव्यं पर्यायो वेति भेदः। यद्द्रव्यं तज्जीवद्रव्यमजीवद्रव्यं च यश्च पर्यायः सोऽपि परिस्पंदात्मकोऽपरिस्पंदात्मकश्चेति सोऽपि सामान्यात्मको विशेषात्मकश्चेति। स च द्रव्यादविष्वग्भूतो विष्वग्भूतो वेति यथा प्रतीतिर्निर्णीयते सर्वथा बाधकाभावात्। वैशेषिकाणां तु तथाऽभ्युपगमो व्याहत एव तन्त्रविरोधात्। न हि तत्तन्त्रे सन्मात्रमेव तत्त्वं सकलपदार्थानां तत्रैवांतर्भावादिति नयोऽस्ति। स्यान्मतं। द्रव्यपदेन सकलद्रव्य-

व्यक्तिभेदप्रभेदानां संग्रहादेको द्रव्यपदार्थः गुण इत्यादिपदेन चैकेन गुणादिभेदप्रभेदानां संग्रहाद्गुणादिरप्येकैकपदार्थो व्यवतिष्ठते "विस्तरेणोपादिष्टानामर्थानां तत्त्वसिद्धये । समासेनाभिधानं यत्संग्रहं तं विदुर्बुधाः" इति ॥ पदार्थधर्मसंग्रहः प्रवक्ष्यत इत्यत्र पदार्थसंग्रहस्य धर्मसंग्रहस्य चैवं व्याख्यानादस्त्येव तथाऽभिप्रायो वैशेषिकाणामिति । तदप्यविचारितरम्यं । परमार्थतस्तथैकैकस्य द्रव्यादिपदार्थस्य प्रतिष्ठानुपपत्तेः । तस्यैकपदविषयत्वेनैकत्वोपचारात् । न चोपचरितपदार्थसंख्याव्यवस्थायां पारमार्थिकी पदार्थसंख्या समवतिष्ठतेऽतिप्रसंगात् । न चैकपदवाच्यत्वेन तात्त्विकमेकत्वं सिद्ध्यति व्यभिचारात्सेनावनादिपदेन हस्त्यादिधवादिपदार्थस्यानेकस्य वाच्यस्य प्रतीतेः । ननु सेनापदवाच्य एक एवार्थः प्रत्यासत्तिविशेषः संयुक्तसंयोगाल्पीयस्त्वलक्षणो हस्त्यादीनां प्रतीयते, वनशब्देन च धवादीनां तादृशप्रत्यासत्तिविशेष इत्येकपदवाच्यत्वं न तात्त्विकीमेकतां व्यभिचरति । तथा चैवमुच्यते द्रव्यमित्येकः पदार्थः एकपदवाच्यत्वात् यद्यदेकपदवाच्यं तत्तदेकपदार्थो यथा सेना वनादिस्तथा च द्रव्यमेकपदवाच्यं तस्मादेकः पदार्थः । एतेन गुणादिरप्येकः पदार्थः प्रसिद्धोदाहरणसाधर्म्यात्साधितो वेदितव्य इति कश्चित् सोऽपि न विपश्चित् । सेनाशब्दादनेकत्र हस्त्यश्वादौ प्रतीतिप्रवृत्तिप्राप्तिसिद्धेः । वनशब्दाच्च धवखदिरपलाशादावनेकत्रार्थे । यत्र हि शब्दात्प्रतीतिप्रवृत्तिप्राप्तयः समधिगम्यन्ते स शब्दस्यार्थः प्रसिद्धस्तथा वृद्धव्यवहारात् । न च सेनावनादिशब्दात्प्रत्यासत्तिविशेषे प्रतीतिप्रवृत्तिप्राप्तयोऽनुभूयंते येन स तस्यार्थः स्यात् । प्रत्यासत्तिविशिष्टा हस्त्यादयो धवादयो वा सेनावनादिशब्दानामर्थ इति चेत्सिद्धस्तर्ह्येकपदवाच्योऽनेकोऽर्थः । तेन च कथमेकपदवाच्यत्वं न व्यभिचरेत् । तथा गौरिति पदेनैकेन पश्वादेर्दशप्रकारस्यैकादशप्रकारस्य वा वाच्यस्य दर्शनाच्च व्यभिचारी हेतुः । कश्चिदाह न गौरित्येकमेव पदं पश्वादेरनेकस्यार्थस्य वाचकं तस्य प्रतिवाच्यभेदादन्य एव हि गौरिति शब्दः पशोर्वाचकोऽन्यश्च दिगादेः अर्थभेदाच्छब्दभेदव्यवस्थितेः । अन्यथा सकलपदार्थस्यैकपदवाच्यत्वप्रसंगादिति । तस्याप्यनिष्टानुषंगः स्यात् । द्रव्यमिति पदस्याप्यनेकत्वप्रसंगात् । पृथिव्याद्यनेकार्थवाचकत्वात् अन्यदेव हि पृथिव्यां द्रव्यमिति पदं प्रवर्तते । अन्यदेवाप्सु तेजसि वाय्वाकाशे काले दिश्यात्मनि मनसि चेत्येकपदवाच्यत्वं द्रव्यपदार्थस्यासिद्धं स्यात् । ननु द्रव्यत्वाभिसंबंध एको द्रव्यपदस्यार्थो नानेकः पृथिव्यादिः तस्य पृथिव्यादिशब्दवाच्यत्वात् । तत एकमेव द्रव्यपदं नानेकमिति चेत् । किमिदानीं द्रव्यत्वाभिसंबंधो द्रव्यपदार्थः स्यात् ? न चासौ द्रव्यपदार्थस्तस्य द्रव्यत्वोपलक्षितसमवायपदार्थत्वात् । एतेन गुणत्वाभिसंबंधो गुणपदस्यार्थः कर्मत्वाभिसंबंधः कर्मपदस्येत्येतत्प्रतिव्यूढं गुणत्वाभिसंबंधस्य गुणत्वोपलक्षितसमवायपदार्थत्वात् कर्मत्वाभिसंबंधस्य च कर्मत्वोपलक्षितसमवायपदार्थस्य कथनात् । न चैवं सामान्यादिपदार्थः सिद्ध्यति । सामान्यादिषु सामान्यान्तराभिसंबंधस्यासंभवादित्युक्तं प्राक् । एतेन पृथिवीत्वाद्यभिसंबंधः पृथिव्यादिशब्दार्थस्य व्याख्यानं प्रत्याख्यातं । न हि पृथिवीत्वाभिसंबंधः पृथिवीशब्दवाच्यः । पृथिवीत्वोपलक्षितस्य समवायस्य पृथिवीत्वाभिसंबंधस्य पृथिवीशब्देनावचनात् । द्रव्यविशेषस्यैव पृथिवीशब्देनाभिधानाददोष इति चेत् । कः पुनरसौ वृक्षक्षुपादिपृथिवीभेदव्यतिरिक्तः पृथिवीद्रव्यविशेषः । पृथिवीति पदेन संगृह्यमाण इति चेत् । कथं पुनः पृथिवीपदेनैकेनानेकार्थः संगृह्यते ? द्रव्यादिपदेनैवेति दुःखवबोधं । कश्चायं संग्रहो नाम ? शब्दात्मकः प्रत्ययात्मकोऽर्थात्मको वा । न तावच्छब्दात्मकः शब्देनानंतानां द्रव्यादिभेदप्रभेदानां वा संग्रहीतुमशक्यत्वात् । तत्र संकेतस्य कर्तुमशक्यत्वादस्मदादेस्तदप्रत्यक्षत्वात् । क्रमेण युगपद्वा अननुमेयत्वाच्च । न चाप्रत्यक्षेऽननुमेये वा सर्वथाप्यप्रतिपन्नेऽर्थे संकेतः शक्यक्रियोऽस्ति । सर्वज्ञस्तत्र संकेतयितुं समर्थोऽपि नाऽसर्वज्ञान् संकेतं ग्राहयितुमलमिति कुतः संकेतः । न चासंकेतितेऽर्थे शब्दः प्रवर्तते यतः

स्याद्वादिनामस्माकं कर्मभूभृद्भेत्तृत्वं मुनीन्द्रस्येष्टं सिद्धं भवतीति वाक्यार्थः । तथाहि—भगवान् परमात्मा कर्मभूभृतां भेत्ता भवत्येव विश्वतत्त्वानां ज्ञातृत्वात् । यस्तु न कर्मभूभृतां भेत्ता स न विश्वतत्त्वानां ज्ञाता यथा रथ्यापुरुषः । विश्वतत्त्वानां ज्ञाता च भगवान् निर्बाधबोधसिद्धः । तस्मात् कर्मभूभृतां भेत्ता भवत्येवेति केवलव्यतिरेकी हेतुः साध्याऽव्यभिचारात् । न तावदयमसिद्धः प्रतिवादिनो वादिनो वा । ताभ्यामुभाभ्यां परमात्मनः सर्वज्ञत्वसाधनात् । नाप्यनैकांतिकः कार्त्स्न्यतो देशतो वा विपक्षे वृत्त्यभावात् । तत एवं न विरुद्धः । न त्वयं कालात्ययापदिष्टस्तदागमबाधितपक्षनिर्देशानंतरं प्रयुक्तत्वात् । सदैव मुक्तः सदैवेश्वरः पूर्वस्याः कोटेर्मुक्तात्मनामिवाभावादित्यागमान्महेश्वरस्य सर्वदा कर्मणामभावप्रसिद्धेस्तद्भेत्तृत्वस्य बाधप्रसिद्धेः । सतां हि कर्मणां कश्चिद्भेत्ता स्यान्न पुनरसतामित्यपरः । सोऽपि न परीक्षादक्षमानसः । तथा तद्बाधकागमस्याप्रमाणत्वात् तदनुग्राहकानुमानाभावात् । ननु च नेश्वराख्यः सर्वज्ञः कर्मभूभृतां भेत्ता सदा कर्ममलैरस्पृष्टत्वात् । यस्तु कर्मभूभृतां भेत्ता स न कर्ममलैः शश्वदस्पृष्टो यथेश्वरादन्यामुक्तात्मा शश्वदस्पृष्टश्च कर्ममलैर्भगवान्महेश्वरस्तस्मान्न कर्मभूभृतां भेत्तेत्यनुमानं प्रकृतपक्षबाधकागमानुग्राहकं । न चात्रासिद्धसाधनं । तथाहि—शश्वत्कर्ममलैः अस्पृष्टः परमात्माऽनुपायसिद्धत्वात् । यस्तु न तथा स नानुपायसिद्धो यथा सादिर्मुक्तात्मा । अनुपायसिद्धश्च सर्वज्ञो भगवान् तस्मात्कर्ममलैः शश्वदस्पृष्ट इत्यतोऽनुमानांतरात्तत्सिद्धेरिति वदंतं प्रत्याह—

**नास्पृष्टः कर्मभिः शश्वद्विश्वदृश्वास्ति कश्चन ।**
**तस्यानुपायसिद्धस्य सर्वथाऽनुपपत्तितः ॥ ८ ॥**

न ह्यनुपायसिद्धत्वे कुतश्चित्प्रमाणादप्रसिद्धे तद्बलात्कर्मभिः शश्वदस्पृष्टत्वसाधनं सिद्धिमध्यास्ते । तदसिद्धौ च न कर्मभूभृद्भेत्तृत्वाभावस्ततः सिध्यति । येनेदमनुमानं प्रस्तुतपक्षबाधकागमस्यानुग्राहकं सिद्ध्येत्तत्प्रामाण्यं साधयन् । न चाप्रमाणभूतेनागमेन प्रकृतः पक्षो बाध्यते हेतुश्च कालात्ययापदिष्टः स्यात् । नन्वीश्वरस्यानुपायसिद्धत्वमनादित्वात्साध्यते । तदनादित्वं च तनुकरणभुवनादौ निमित्तकारणत्वादीश्वरस्य । न चैतदसिद्धं । तथा हि—तनुभुवनकरणादिकं विवादापन्नं बुद्धिमन्निमित्तकं कार्यत्वात् । यत्कार्यं तद्बुद्धिमन्निमित्तकं दृष्टं यथा वस्त्रादि । कार्यं चेदं प्रकृतं तस्माद् बुद्धिमन्निमित्तकं । योऽसौ बुद्धिमांस्तद्धेतुः स ईश्वर इति प्रसिद्धं साधनं तदनादित्वं साधयत्येव । तस्य सादित्वे ततः पूर्वं तन्वाद्युत्पत्तिविरोधात् । तदुत्पत्तौ वा तद्बुद्धिमन्निमित्तत्वाभावप्रसंगात् । यदि पुनस्ततः पूर्वमन्यबुद्धिमन्निमित्तकत्वमिष्यते तदा ततोऽपि पूर्वमन्यद्बुद्धिनिमित्तकत्वमिष्यते तदा ततोऽपि पूर्वमन्यबुद्धिमन्निमित्तकत्वमित्यनादीश्वरसंततिः सिद्ध्येत् । न चैषा युक्तिमती । पूर्वेश्वरस्यानंतस्य सिद्धावुत्तरसकलेश्वरकल्पना वैयर्थ्यात् । तेनैव तन्वादिकार्यपरम्परायाः सकलाया निर्माणात् । ततोऽपि पूर्वस्यानंतस्य महेश्वरस्य सिद्धौ तस्य वैयर्थ्यादन्यथा परस्परमिच्छाव्याघातप्रसंगादनेकेश्वरकारणत्वापत्तेश्च जगतः । सुदूरमपि गत्वाऽनादिरेक एवेश्वरोऽनुमंतव्यः । स पूर्वेषामपि गुरुः कालेनाविच्छेदादिति तस्य जगन्निमित्तत्वसिद्धेरनादित्वमंतरेणानुपपत्तेरित्यनादित्वसिद्धिः । ततो न कर्मभूभृतां भेत्ता मुनींद्रः शश्वत्कर्मभिरस्पृष्टत्वात् । यस्तु कर्मभूभृतां भेत्ता स न शश्वत्कर्मभिरस्पृष्टः । यथोपायान्मुक्तः । शश्वत्कर्मभिरस्पृष्टश्च भगवांस्तस्मान्न कर्मभूभृतां भेत्ता शश्वत्कर्मभिरस्पृष्टोऽसावनुपायसिद्धत्वात् । यस्तु न तथा स नानुपायसिद्धः । यथा सोपायमुक्तात्मा अनुपायसिद्धश्चायं तस्मात्सदा कर्मभिरस्पृष्टः । अनुपायसिद्धोऽयमनादित्वात् । यस्तु न तथा स नानादिः । यथेतरो मुक्तात्मा । अनादिश्चायं तस्मादनुपायसिद्धः । अनादिरयं तनुकरणभुवनादिनिमित्तत्वात् । यस्तु नानादिः स न त

तनुकरणभुवनादिनिमित्तकः । यथाऽपरोमुक्तात्मा । तनुकरणभुवनादिनिमित्तं च भगवांस्तस्मा-
दिति । तनुकरणभुवनादिनिमित्तत्वं तु तस्य तन्वादेर्बुद्धिमन्निमित्तत्वसाधनात् । तन्वादयो बुद्धिमन्निमि-
त्तकाः कार्यत्वात् । यत्कार्यं तद्बुद्धिमन्निमित्तकं दृष्टं । यथा वस्त्रादि । कार्यं च तन्वादयो विवादापन्नास्त-
स्माद् बुद्धिमन्निमित्तका इत्यनुमानमालाऽमला । कर्मभूभृतां भेत्तारमपास्यत्येव । न चेदं कार्यत्वम-
सिद्धं तन्वादेर्विप्रतिवादिनो कार्यत्वाभ्यनुज्ञानात् । नाप्यनैकान्तिकं, कस्यचित्कार्यस्याबुद्धिमन्निमि-
त्तस्यासंभवाद्विपक्षे वृत्त्यभावात् । न चेश्वरशरीरेण व्यभिचारस्तदसिद्धेरीश्वरस्याशरीरत्वात् । नापी-
श्वरज्ञानेन । तस्य नित्यत्वात्कार्यत्वासिद्धेः । न चेश्वरेच्छया । तस्येच्छाशक्तेरपि नित्यत्वात् क्रियाश-
क्तिवत् । तत एव न विरुद्धं साधनं सर्वथा विपक्षे वृत्त्यभावात् । नचाय कालात्ययापदिष्टो
हेतुः पक्षस्य प्रत्यक्षादिप्रमाणेनाबाधितत्वात् । न हि तन्वादेर्बुद्धिमन्निमित्तत्वं प्रत्यक्षेण बाध्यते
तस्यातीन्द्रियतया तदविषयत्वात् । नाप्यनुमानेन तस्य तद्विपरीतसाधनस्यासंभवात् । ननु
तनुभुवनकरणादयो न बुद्धिमन्निमित्तका दृष्टकर्तृकप्रासादादिविलक्षणत्वादाकाशादिवदित्यनुमानं पक्षस्य
बाधकमिति चेत् न । असिद्धत्वात् । सन्निवेशादिविशिष्टत्वेन दृष्टकर्तृकप्रासादाद्यविलक्षणत्वात्तन्वादीनां
यदि पुनरगृहीतसमयस्य कृतबुद्ध्युत्पादकत्वाभावात्तन्वादीनां दृष्टकर्तृकविलक्षणत्वमिष्यते तदा कृत्रि-
माणामपि मुक्ताफलादीनामगृहीतसमयस्य कृतबुद्ध्यनुत्पादकत्वादबुद्धिमन्निमित्तकत्वप्रसंगः । न च
दृष्टकर्तृकत्वादृष्टकर्तृकत्वाभ्यां बुद्धिमन्निमित्तत्वेतरत्वसिद्धिः साधीयसी तदविनाभावाभावात् । न ह्यदृष्ट-
कर्तृकत्वमबुद्धिमन्निमित्तत्वेन व्याप्तं जीर्णप्रासादादेरदृष्टकर्तृकस्यापि बुद्धिमन्निमित्तत्वसिद्धेरिति न दृष्ट-
कर्तृकविलक्षणत्वमबुद्धिमन्निमित्तत्वं साधयेत् यतोऽनुमानबाधितः पक्षः स्यात् कालात्ययापदिष्टं च
साधनमभिधीयेत । नाप्यागमेन प्रकृतः पक्षो बाध्यते तत्साधकस्यैवागमस्य प्रसिद्धेः । तथा हि ' विश्व-
तश्चक्षुरुत विश्वतोमुखो, विश्वतो बाहुरुत विश्वतः पात्, सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जन-
यन् देव एकः" श्रुते सद्भावात् । तथा व्यासवचनं च । "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा" इति पक्षस्यानुग्राहकमेव न तु बाधकं । ततो न कालात्ययापदिष्टो
हेतुरबाधितपक्षनिर्देशानन्तरं प्रयुक्तत्वात् । तत एव न सत्प्रतिपक्षः बाधकानुमानाभावादित्यनवद्यं कार्य-
त्वसाधनं तन्वादीनां बुद्धिमन्निमित्तत्वं साधयत्येव । यदप्युच्यते कैश्चिद्बुद्धिमन्निमित्तत्वसामान्ये साध्ये
तन्वादीनां सिद्धसाधनमनेकतदुपभोक्तृबुद्धिमन्निमित्तत्वसिद्धेः । तेषां तददृष्टनिमित्तत्वात्तददृष्टस्य
चेतनात्मकत्वात् चेतनायाश्च बुद्धित्वाद् बुद्धिमन्निमित्तत्वसिद्धेरिति । तदप्यसारं । तन्वाद्युपभोक्तृप्राणि-
नामदृष्टस्य धर्माधर्मसंज्ञकस्य चेतनत्वासिद्धेरबुद्धित्वात् । अर्थग्रहणं हि बुद्धिश्चेतना न च धर्मोऽधर्म-
श्चाधर्मो वा तथा बुद्धेरन्यत्वात् प्रयत्नादिवदिति नानेकबुद्धिमन्निमित्तत्वं तन्वादीनां सिद्ध्यति यतः
सिद्धसाधनं बुद्धिमन्निमित्तत्वसामान्ये साध्येऽभिधीयते ॥ ननु च घटादि सशरीरेणासर्वज्ञेन च
बुद्धिमता कुम्भकारादिना क्रियमाणं दृष्टमिति तन्वादिकार्यमपि सशरीरासर्वज्ञबुद्धिमन्निमित्तं सिद्ध्येदि-
तीष्टविरुद्धसाधनाद्विरुद्धं साधनं । सर्वज्ञेनाशरीरेण क्रियमाणस्य कस्यचिद्वस्त्रादिकार्यस्यासिद्धेश्च
साध्यविकलमुदाहरणमिति कश्चित् । सोऽपि न युक्तवादी तथा सर्वानुमानोच्छेदप्रसंगात् । तथा हि
साग्निरयं पर्वतो धूमवत्त्वान्महानसवदित्यत्रापि पर्वतादौ महानसपरिदृष्टस्यैव खादिरपालाशाद्यग्निना-
ग्निमत्त्वस्य सिद्धेर्विरुद्धसाधनाद्विरुद्धं साधनं स्यात् । तार्णादिनाग्निमत्त्वस्य पर्वतादौ साध्यस्य महान-
सादावभावात् साध्यविकलमुदाहरणमप्यनुषज्येत । यदि पुनरग्निमत्त्वसामान्यं देशादिविशिष्टं पर्वतादौ
साध्यत इति नेष्टविरुद्धं साधनं । नापि साध्यविकलमुदाहरणं महानसादावपि देशादिविशिष्टस्याग्नि-

---

१ अबुद्धिमन्निमित्तादिकं विपक्षः । २ कायकार्यं निवारणाश्रितं । ३ वचनं ४ व्यापारः ५ व्याप्तिरतं ६ पुण्यपापयोः । ७ परमाणुभिः ।

मस्त्वस्य सद्भावादिति मतं तदा तन्वादिषु बुद्धिमन्निमित्तत्वसामान्यं तन्वादिस्वकार्यविनिर्माणशक्ति विशिष्टं साध्यत इति नेष्टविरुद्ध साधनो हेतुः । नापि साध्यविकलो दृष्टांतः स्वकार्यविनिर्माणशक्ति विशिष्टस्य बुद्धिमन्निमित्तत्वसामान्यस्य साध्यस्य तत्र सद्भावात् । सिद्धे च बुद्धिमन्निमित्तत्वसामान्ये किमयं बुद्धिमान् हेतुः सशरीरोऽशरीरो वेति विप्रतिपत्तौ तस्याशरीरत्वं साध्यते सशरीरत्वे बाधक-सद्भावात् । तच्छरीरं हि न तावन्नित्यमनादि सावयवत्वादस्मदादिशरीरवत् । नाप्यनित्यं सादि तदुत्पत्तेः पूर्वमीश्वरस्याशरीरत्वसिद्धेः शरीरांतरेण सशरीरत्वेऽनवस्थाप्रसंगात् । तथा किमसौ सर्वज्ञोऽसर्वज्ञो वेति विवादे सर्वज्ञत्वं साध्यते तस्यासर्वज्ञत्वे समस्तकारकप्रयोक्तृत्वानुपपत्तेः तन्वादिकारणत्वाभावप्रसंगात् । तन्वादि सकलकारकाणां परिज्ञानाभावेऽपि प्रयोक्तृत्वे तन्वादिकार्यव्याघातप्रसंगात् । कुविंदादेर्वस्त्रादिकारकस्यापरिज्ञाने तद्व्याघातवत् । न चेश्वरकार्यस्य तनुकरणभुवनादेः कदाचिद्व्याघातः संभवति महेश्वरसमीहितकार्यस्य यथाकारकसंपातं विचित्रस्यादृष्टादेरव्याघातदर्शनात् । यदप्यभ्यधायि तनुकरणभुवनादिकं नैकस्वभावेश्वरकारणकृतं विचित्रकार्यत्वात् । यद्विचित्रं कार्यं तन्नैकस्वभावकारणकृतं दृष्टं यथा घटपटमुकुटशकटादि, विचित्रकार्यं च प्रकृतं तस्मान्नैकस्वभावेश्वराख्यकारणकृतमिति तदप्यसम्यक् सिद्धसाध्यतापत्तेः । न ह्येकस्वभावमीश्वराख्यं तन्वादेर्निमित्तकारणमिष्यते तस्य ज्ञानशक्तीच्छाशक्तिक्रियाशक्तित्रयस्वभावत्वात् । तनुकरणभुवनाद्युपभोक्तृप्राणिगणादृष्टविशेषवैचित्र्यसहकारित्वाच्च विचित्रस्वभावोपपत्तेः घटपटमुकुटादिकार्यस्यापि तन्निदर्शनस्य तदुत्पादनविज्ञानेच्छाक्रियाशक्तिविचित्रतदुपकरणसचिवेनैकेन पुरुषेण समुत्पादनसंभवात्साध्यविकलत्वानुषंगात् तदेवं कार्यत्वं हेतुस्तनुकरणभुवनादेर्बुद्धिमन्निमित्तत्वं साधयत्येव सकलदोषरहितत्वादिति वैशेषिकाः समभ्यमंसत तेऽपि न समंजसवाचः । तनुकरणभुवनादयो बुद्धिमन्निमित्तका इति पक्षस्य व्यापकानुपलंभेन बाधितत्वात् कार्यत्वादिहेतोः कालात्ययापदिष्टत्वाच्च । तथा हि तन्वादयो न बुद्धिमन्निमित्तकास्तदन्वयव्यतिरेकानुपलंभात् । यत्र यदन्वयव्यतिरेकानुपलंभस्तत्र न तन्निमित्तकत्वं दृष्टं यथा घटघटीशरावोदचनादिषु कुविंदाद्यन्वयव्यतिरेकाऽननुविधायिषु न कुविंदादिनिमित्तकत्वं । बुद्धिमदन्वयव्यतिरेकाऽनुपलंभश्च तन्वादिषु, तस्मान्नबुद्धिमन्निमित्तकत्वमिति व्यापकानुपलंभः तत्कारणकत्वस्य तदन्वयव्यतिरेकोपलंभेन व्याप्तत्वात् कुलालकारणकस्य घटादेः कुलालान्वयव्यतिरेकोपलंभ प्रसिद्धेः सर्वत्र बाधकाभावात् । तस्य तद्व्यापकत्वव्यवस्थानात् । न चायमसिद्धस्तन्वादीनामीश्वरव्यतिरेकानुपलंभस्य प्रमाणसिद्धत्वात् । स हि न तावत्कालव्यतिरेकः शाश्वतिकत्वादीश्वरस्य कदाचिदभावासंभवात् । नापि देशव्यतिरेकः तस्य विभुत्वेन क्वचिदभावानुपपत्तेरीश्वराभावे कदाचित्क्वचित्तन्वादिकार्याभावानिश्चयात् । स्यान्मतं महेश्वरसिसृक्षानिमित्तत्वात्तन्वादिकार्यस्यायमदोष इति । तदप्यसत्यं । तदिच्छाया नित्यानित्यविकल्पद्वयानतिवृत्तेः । तस्यानित्यत्वे व्यतिरेकासिद्धिः । सर्वदासद्भावात्तन्वादिकार्योत्पत्तिप्रसंगात् । नन्वीश्वरेच्छाया नित्यत्वेऽप्यसर्वगतत्वात् व्यतिरेकः सिद्ध एव क्वचिन्महेश्वरसिसृक्षापाये तन्वादिकार्यानुत्पत्तिसंभवादिति चेन्न । तद्देशे व्यतिरेकाभावसिद्धेः । देशांतरे सर्वदा तदनुपपत्तेः कार्यानुदयप्रसंगात् । अन्यथा तदनित्यत्वापत्तेः अनित्यैवेच्छास्त्विति चेत् सा तर्हि सिसृक्षा महेश्वरस्योत्पद्यमाना सिसृक्षांतरपूर्विका यदीष्यते तदाऽनवस्थाप्रसंगः परापरसिसृक्षोत्पत्तावेव महेश्वरस्योपक्षीणशक्तिकत्वात्प्रकृततन्वादिकार्यानुदय एव स्यात् यदि पुनः प्रकृततन्वादिकार्योत्पत्तौ महेश्वरस्य सिसृक्षोत्पद्यते सापि तत्पूर्वसिसृक्षात इत्यनादिसिसृक्षासंततिर्नानवस्थादोषमास्कंदति सर्वत्रकार्यकारणसंतानस्यानादित्वसिद्धेर्बीजांकुरादिवदित्यभिधीयते तदा युगपन्नानादेशेषु तन्वादिकार्यस्योत्पादो नोपपद्येत यत्र यत्कार्योत्पत्तये महेश्वरसिसृक्षा तत्र तस्यैव कार्यस्योत्पत्ति-

१ कारकसंघातमित्यपि पाठः

घटनात् । न च यावत्सु देशेषु यावन्ति कार्याणि समुत्पन्नानि तावत्यः सिसृक्षास्तस्येश्वरस्य सकृदुपजायंत इति वक्तुं शक्यं युगपदनेकेच्छाप्रादुर्भावविरोधादस्मदादिवत् । यदि पुनरेकैव महेश्वरसिसृक्षा युगपन्नानादेशकार्यजननाय प्रजायत इतीष्यते तदा क्रमशोऽनेकतन्वादिकार्योत्पत्तिविरोधस्तादिच्छायाः शाश्वद्भावात् । अथ मतमेतत् यत्र यदा यथा यत् कार्यमुत्पित्सु तत्र तदा तथा तदुत्पादनेच्छा महेश्वरस्यैकैव तादृशी समुत्पद्यते ततो नानादेशेष्वेकत्र देशे च क्रमेण युगपच्च तादृशमन्यादृशं च तन्वादिकार्यं प्रादुर्भवदविरुध्यत इति तदप्यसंभाव्यं क्वचिदेकत्र प्रदेशे समुत्पन्नायाः सिसृक्षायाः दविष्ठदेशेषु विभिन्नेषु नानाविधेषु नानाकार्यजनकत्वविरोधात् अन्यथा तदसर्वगतत्वेऽपि देशव्यतिरेकानुपपत्तेः । यदि हि यद्देशा सिसृक्षा तद्देशमेव कार्यजन्म नाऽन्यदेशमिति व्यवस्था स्यात्तदा देशव्यतिरेकः सिद्ध्येत् नान्यथेति सिसृक्षाया न व्यतिरेकोपलंभो महेश्वरवत् । व्यतिरेकाभावे च नान्वयनिश्चयः शक्यः कर्तुं सर्वदेश्वरे तन्वादिकार्याणां जन्मैतदन्वयो हि पुरुषांतरेष्वपि समानः । तेष्वपि सत्सु तन्वादिकार्योत्पत्तिसिद्धेः । न च तेषां सर्वकार्योत्पत्तौ निमित्तकारणत्वं दिक्कालाकाशानामिव संमतं । परेषां सिद्धांतविरोधान्महेश्वरनिमित्तकारणत्ववैयर्थ्याच्च । यदि पुनस्तेषु पुरुषांतरेषु सत्स्वपि कदाचित्तन्वादिकार्यानुत्पत्तिदर्शनान्न तन्निमित्तकारणत्वं तदन्वयाभावश्चेति मतं तदीश्वरे सत्यपि कदाचित्तन्वादिकार्यानुत्पत्तेरीश्वरस्यापि तन्निमित्तकारणत्वं माभूत् । तदन्वयासिद्धिश्च तद्वदायाता । एतेनेश्वरसिसृक्षायां नित्यायां सत्यामपि तन्वादिकार्याजन्मदर्शनादन्वयाभावः साधितः । कालादीनां च तेषु सत्स्वपि सर्वकार्यानुत्पत्तेः । स्यान्मतं सामग्री जनिका कार्यस्य नैकं कारणं ततस्तदन्वयव्यतिरेकावेव कार्यस्यान्वेषणीयौ नैकेश्वरान्वयव्यतिरेकौ सामग्री च तन्वादिकार्योत्पत्तौ तत्समवायिकारणमसमवायिकारणं निमित्तकारणं चेति । तेषु सत्सु कार्योत्पत्तिदर्शनादसत्सु चादर्शनादिति सत्यमेतत् । केवलं यथा समवाय्यसमवायिकारणानामनित्यानां धर्मादीनां च निमित्तकारणानामन्वयव्यतिरेकौ प्रसिद्धौ कार्यजन्मनि तथा नेश्वरस्य नित्यसर्वगतस्य तदिच्छाया वा नित्यैकस्वभावाया इति तदन्वयव्यतिरेकानुपलंभः प्रसिद्ध एव । न हि सामग्र्येकदेशस्यान्वयव्यतिरेकसिद्धौ कार्यजन्मनि सर्वसामग्र्यास्तदन्वयव्यतिरेकसिद्धिरिति वक्तुं युक्तं । प्रत्येकं सामग्र्येकदेशानां कार्योत्पत्तावन्वयव्यतिरेकनिश्चयस्य प्रेक्षापूर्वकारिभिरन्वेषणात् । पटाद्युत्पत्तौ कुविंदादिसामग्र्येकदेशवत् । यथैव हि तंतुतुरीवेमशलाकादीनामन्वयव्यतिरेकाभ्यां पटस्योत्पत्तिर्दृष्टा तथा कुविंदान्वयव्यतिरेकाभ्यामपि । तदुपभोक्तृजनादृष्टान्वयव्यतिरेकाभ्यामिवेति सुप्रतीतं । ननु सर्वकार्योत्पत्तौ दिक्कालाकाशादिसामग्र्यन्वयव्यतिरेकानुविधानवदीश्वरादिसामग्र्यन्वयव्यतिरेकानुविधानस्य सिद्धेर्न व्यापकानुपलंभः सिद्ध इति चेत् न दिक्कालाकाशादीनामपि नित्यसर्वगतनिरवयवत्वे कथंचिदन्वयव्यतिरेकानुविधानायोगादुदाहरणवैषम्यात् तेषामपि हि परिणामित्वे सप्रदेशत्वे च परमार्थतः स्वकार्योत्पत्तौ निमित्तत्वसिद्धेः ॥ नन्वेवमीश्वरस्यापि बुद्ध्यादिपरिणामैः स्वतोऽर्थांतरभूतैः परिणामित्वात् शरीरसर्वमूर्तिमद्द्रव्यसंयोगनिबंधनप्रदेशसिद्धेश्च तन्वादिकार्योत्पत्तौ निमित्तकारणत्वं युक्तं तदन्वयव्यतिरेकानुविधानस्य तन्वादेरुपपन्नत्वात् । स्वतोऽर्थांतरभूतैरेव हि ज्ञानादिपरिणामैरीश्वरस्य परिणामित्वं नेष्यते स्वारंभकावयवैश्च सावयवत्वं निराक्रियते । न पुनरन्यथा, विरोधाभावात् चैवमनिष्टप्रसंगः द्रव्यांतरपरिणामैरपि परिणामित्वप्रसंगात् तेषां तत्रासमवायात् । न हि यत्र समवयंति परिणामास्तैरेव तस्य परिणामित्वं । परमाणोश्च स्वारंभकावयवाभावेऽपि सप्रदेशत्वप्रसंगो नानिष्टापत्तये नैयायिकानां । परमाण्वंतरसंयोगनिबंधनस्यैकस्य प्रदेशस्य परमाणोरपीष्टत्वात् । न चौपचारिकत्वप्रसक्तिस्तेषां पारमार्थ्येन विरुद्धत्वात् स्वारंभकावयवलक्षणानां प्रदेशानां तत्रोपचरितत्वप्रतिज्ञानात् । मूर्तिमद्द्रव्यसंयोगनिबंधनानां तु तेषां पारमार्थिकत्वात् अन्यथा सर्वमूर्तिमद्द्रव्यसंयोगानां युगपद्भाविनामुपचरितत्वप्रसंगात् विभुद्रव्याणां सर्वगतत्वमप्यु-

पचरितं स्यात् । परमाणोश्च परमाण्वंतरसंयोगस्य पारमार्थिकासिद्धेर्व्यणुकादिकार्यद्रव्यमपारमार्थिकमापद्येत । कारणस्योपचरितत्वे कार्यस्यानुपचरितत्वायोगादिति केचित्प्रचक्ष्यते । तेऽपि स्याद्वादिमतसंघसर्पविलप्रवेशन्यायेनानुसरंतोऽपि नेश्वरस्य निमित्तकारणत्वं तन्वादिकार्योत्पत्तौ समर्थयितुमीशते । तथापि तदन्वयव्यतिरेकानुविधानस्य साधयितुमशक्यत्वादात्मांतरान्वयव्यतिरेकानुविधानवत् । यथैव ह्यात्मांतराणि तन्वादिकार्योत्पत्तौ न निमित्तकारणानि तेषु सत्सु भावादन्वयसिद्धावपि तच्छून्ये च देशे क्वचिदपि तन्वादिकार्यानुत्पत्तेर्व्यतिरेकसिद्धावपि च । तथेश्वरे सत्येव तन्वादिकार्योत्पत्तेस्तच्छून्ये प्रदेशे क्वचिदपि तदनुत्पत्तेस्तच्छून्यस्य प्रदेशस्यैवाभावादन्वयव्यतिरेकसिद्धावपीश्वरो निमित्तकारणं माभूत् सर्वथा विशेषाभावात् । स्यान्मतं महेश्वरस्य बुद्धिमत्त्वात् समस्तकारकपरिज्ञानयोगात्तत्प्रयोक्तृत्वलक्षणं निमित्तकारणत्वं तन्वादिकार्योत्पत्तौ व्यवतिष्ठते । न पुनरात्मांतराणामज्ञत्वात्तल्लक्षणनिमित्तकारणत्वाघटनादिति । तदपि न समीचीनं सर्वज्ञस्य समस्तकारकप्रयोक्तृत्वासिद्धेः योग्यंतरवत् । न हि योग्यंतराणां सर्वज्ञत्वेऽपि समस्तकारकप्रयोक्तृत्वमिष्यते । ननु तेषां समस्तपदार्थज्ञानस्योत्पत्तस्य योगाभ्यासविशेषजन्मनः सद्भावे सकलमिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखपरिक्षयात्परमनिःश्रेयससिद्धेः समस्तकारकप्रयोक्तृत्वासिद्धिः । न पुनरीश्वरस्य तस्य सदा मुक्तत्वात् सदैवेश्वरत्वाच्च संसारिमुक्तविलक्षणत्वात् । न हि संसारिवदज्ञो महेश्वरः प्रतिज्ञायते नापि मुक्तवत् समस्तज्ञानैश्वर्यरहित इति तस्यैव समस्तकारकप्रयोक्तृत्वलक्षणं निमित्तकारणत्वं कायादिकार्योत्पत्तौ संभाव्यत इति केचित् । तेऽपि न विचारचतुरचेतसः । कायादिकार्यस्य महेश्वराभावे क्वचिदभावासिद्धेर्व्यतिरेकासंभवस्य प्रतिपादितत्वात् । नित्यविभ्वन्वयस्याप्यभावात् । ननु च यत्र यदा यथा महेश्वरसिसृक्षा संभवति तत्र तदा तथा कायादिकार्यमुत्पद्यते । अन्यत्रान्यदाऽन्यथा तदभावान्नोत्पद्यत इत्यन्वयव्यतिरेकौ महेश्वरसिसृक्षायाः कायादिकार्यमनुविधत्ते कुंभादिकार्यवत् कुलालादिसिसृक्षायाः । ततो नान्वयव्यतिरेकयोर्व्यापकयोरनुपलंभोऽस्ति यतो व्यापकानुपलंभः पक्षस्य बाधकः स्यादितिचेन्न । तस्या महेश्वरसिसृक्षायाः कायादिकार्योत्पत्तौ नित्यानित्यत्वविकल्पद्वयेऽपि निमित्तकारणत्वनिराकरणात् । तदन्वयव्यतिरेकानुविधानस्यासिद्धेर्व्यापकानुपलंभः प्रसिद्ध एव पक्षस्य बाधक इत्यनुमानबाधितपक्षत्वात् कालात्ययापदिष्टहेतुत्वाच्च न बुद्धिमन्निमित्तत्वसाधनं साधीयः सिद्धं यतोऽनुपायसिद्धः सर्वज्ञोऽनादिः कर्मभिरस्पृष्टः सर्वदा सिद्ध्येदिति सूक्तं "तस्यानुपायसिद्धस्य सर्वथाऽनुपपत्तितः" इति । योप्याह मोक्षमार्गप्रणीतिरनादिसिद्धसर्वज्ञमंतरेण नोपपद्यते सोपायसिद्धस्य सर्वज्ञस्यानवस्थानात् मोक्षमार्गप्रणीतेरसंभवात् अवस्थाने वा तस्य समुत्पन्नतत्त्वज्ञानस्यापि साक्षात्तत्त्वज्ञानं मोक्षस्य कारणं तद्भावभावित्वाभावात्तत्त्वज्ञानात्पूर्वं मोक्षमार्गस्य प्रणयने तदुपदेशस्य प्रामाण्यायोगादतत्त्वज्ञवचनाद्रथ्यापुरुषवचनवत् । नापि प्रादुर्भूतसाक्षात्तत्त्वज्ञानस्यापि परमवैराग्योत्पत्तेः पूर्वमवस्थानसंभवान्मोक्षमार्गप्रणीतिर्युक्ता । साक्षात्सकलतत्त्वज्ञानस्यैव परमवैराग्यस्वभावत्वात् । एतेन सम्यग्दर्शनज्ञानचारित्रप्रकर्षपर्यंतप्राप्तौ निःश्रेयसमिति वदतोऽपि न मोक्षमार्गप्रणयनसिद्धिरिति प्रतिपादितं बोद्धं । केवलज्ञानोत्पत्तौ क्षायिकसम्यग्दर्शनस्य क्षायिकचारित्रस्य च परमप्रकर्षपरिप्राप्तस्य सद्भावात् सम्यग्दर्शनादित्रयप्रकर्षपर्यंतप्राप्तौ परममुक्तिप्रसंगादवस्थानायोगान्मोक्षमार्गोपदेशासंभवात् तदाप्यवस्थाने सर्वज्ञस्य न तावन्मात्रकारणत्वं मोक्षस्य स्यात् तद्भावभावित्वाभावादेव ज्ञानमात्रवदिति तन्मतमप्यनूद्य विचारयन्नाह—

प्रणीतिर्मोक्षमार्गस्य न विनाऽनादिसिद्धतः ।
सर्वज्ञादिति तत्सिद्धिर्न परीक्षासहा स हि ॥९॥

**प्रणेता मोक्षमार्गस्य नाशरीरोऽन्यमुक्तवत् ।**
**सशरीरस्तु नाऽकर्मा संभवत्यज्ञजंतुवत् ॥१०॥**

यस्मादनादिसिद्धात्सर्वज्ञान्मोक्षमार्गप्रणीतिः सादिसर्वज्ञान्मोक्षमार्गप्रणयनासंभवभयादभ्युपगम्यते । *सोऽशरीरो वा स्यात्सशरीरो वा गत्यंतराभावात्* । न तावदशरीरो मोक्षमार्गस्य प्रणेता संभवति तदन्यमुक्तवद्वाक्प्रवृत्तेरयोगात् । नापि सशरीरः सकर्मकत्वप्रसंगादस्मदादिप्राणिवत् । ततो न अनादिसिद्धस्य सर्वज्ञस्य मोक्षमार्गप्रणीतिः परीक्षां सहते यतोऽसौ व्यवस्थाप्यते । ननु चाशरीरस्य सशरीरस्य वा मोक्षमार्गप्रणीतिर्मिथ्याज्ञानत्वात् ज्ञानेच्छाप्रयत्ननिमित्तत्वात्तस्या कायादिकार्योत्पादनवत् । तस्मात्तन्निबंधनस्योपलब्धेः कार्योत्पादनस्य । तथा हि कुम्भकारः कुम्भादिकार्यं कुर्वन् सशरीरत्वेन कुर्वीत सर्वस्य सशरीरस्य कुविंदादेरपि कुम्भादिकरणप्रसंगात् । नाप्यशरीरत्वेन कश्चित्कुम्भादिकार्यं कुरुते मुक्तस्य तत्करणप्रसंगात् । किं तर्हि कुम्भादिकार्योत्पादनज्ञानेच्छाप्रयत्नैः कुम्भकारः कुम्भादिकार्यं कुर्वन्नुपलभ्यते तदन्यतमापायेऽपि तदनुपपत्तेः ज्ञानापाये कस्यचिदिच्छतोऽपि कार्योत्पादनादर्शनात् । कार्योत्पादनेच्छापाये च ज्ञानवतोऽपि तदनुपलब्धेः । तत्र प्रयत्नापाये च कार्योत्पादनज्ञानेच्छावतोऽपि तदसंभवात् । *ज्ञानादित्रयसद्भावे* च कार्योत्पत्तिदर्शनात् तस्य ज्ञानेच्छाप्रयत्ने निबंधनमेव कार्यकारणमनुमंतव्यं । तदस्ति च महेश्वरज्ञानेच्छाप्रयत्नत्रयं । यतोऽसौ मोक्षमार्गप्रणयनं कायादिकार्यवत्करोत्येव विरोधाभावादिति कश्चित् सोऽपि न युक्तवादी विचारासहत्वात् । सदा कर्मभिरस्पृष्टस्य कथंचिदिच्छाप्रयत्नयोरयोगात्तदाह—

**न चेच्छा शक्तिरीशस्य कर्माभावेऽपि युज्यते ।**
**तदिच्छावाऽनभिव्यक्ता क्रियाहेतुः कुतोऽज्ञवत् ॥११॥**

न हि कुम्भकारस्येच्छाप्रयत्नौ कुम्भाद्युत्पत्तौ निःकर्मणः प्रतीतौ सकर्मण एव तस्य तत्प्रसिद्धेः । यदि पुनः संसारिणः कुम्भकारस्य कर्मनिमित्तेच्छा सिद्धा तदा मुक्तस्य तु कर्माभावेऽपीच्छाशक्तिः संभवति सोऽपि यन्मुक्तस्येच्छापायात् न च तद्वदीश्वरस्य तदसंभव इति मतं । तदा सा महेश्वरेच्छाशक्तिरभिव्यक्तानभिव्यक्ता वा । न तावदभिव्यक्ता तदभिव्यंजकाभावात् तज्ज्ञानमेव तदभिव्यंजकमिति चेत् न तस्य शश्वदभावादीश्वरस्य सदेच्छाभिव्यक्तिप्रसंगात् । न चैवं तस्याः कादाचित्कत्वात् । अन्यथा वर्षशतांते वर्षशतांते महेश्वरेच्छोत्पद्यते इति सिद्धांतविरोधात् । यदि पुनस्तस्यास्तदुपभोक्तृप्राणिगणादृष्टं तदभिव्यंजकमिति मतिः तदा तददृष्टमीश्वरेच्छानिमित्तकमन्यनिमित्तकं वा । प्रथमपक्षे परस्पराश्रयदोषः सत्यामीश्वरेच्छाभिव्यक्तौ प्राणिनामदृष्टं सति च तददृष्टे महेश्वरेच्छाभिव्यक्तिरिति । स्यान्मतं प्राणिनामदृष्टं पूर्वेश्वरेच्छानिमित्तकं तदभिव्यक्तिश्च तत्पूर्वप्राण्यदृष्टनिमित्तात् तदपि तददृष्टं पूर्वेश्वरेच्छानिमित्तकमित्यनादिरियं कार्यकारणभावेन प्राणिगणादृष्टेश्वरेच्छाभिव्यक्त्योः संततिः । ततो न परस्पराश्रयदोषो बीजांकुरसंततिवदिति । तदनुपपन्नं । एकानेकप्राण्यदृष्टनिमित्तत्वविकल्पद्वयानतिक्रमात् । *सा हीश्वरेच्छाभिव्यक्तिर्यद्येकप्राण्यदृष्टनिमित्ता* तदा तद्भोग्यकायादिकार्योत्पत्तावेव निमित्तं स्यात् न सकलप्राण्युपभोग्यकायादिकार्योत्पत्तौ, तथा च सकृदनेकप्राण्युपभोग्यकायादिकार्योपलंभनं न स्यात् । यदि पुनरनेकप्राण्यदृष्टनिमित्ता तदा तस्या नानास्वभावप्रसंगो नानाकायादिकार्यकरणात् । न ह्येकप्राण्युपभोग्यकायादिनिमित्तेनैकेन स्वभावेनेश्वरेच्छाभिव्यक्ता, नानाप्राण्युपभोग्यकायादिकार्यकरणा समर्था, अतिप्रसंगात् । यदि पुनस्तादृश एवैकस्वभावो नानाप्राण्यदृष्टनिमित्तो येन नानाप्राण्युपभोग्यकायादिकार्याणां नानाप्रकाराणामीश्वरेच्छा निमित्तकारणं

भवतीति मतं तदा न किंचिदनेकस्वभावं वस्तु सिद्ध्येत् विचित्रकार्यकरणैकस्वभावादेव भावाद्विचित्रकार्योत्पत्तिघटनात् । तथा च घटादिरपि रूपरसगंधस्पर्शाद्यनेकस्वभावाभावेऽपि रूपादिज्ञानमनेकं कार्यं कुर्वीत, शक्यं हि वक्तुं तादृगेकस्वभावो घटादेर्येन चक्षुराद्यनेकसामग्रीसन्निधानादनेकरूपादिज्ञानजनननिमित्तं भवेदिति । कुतः पदार्थनानात्वव्यवस्था । प्रत्ययनानात्वस्यापि पदार्थैकत्वेऽपि भावाविरोधात् । न हि द्रव्यमेकः पदार्थः नानागुणादिप्रत्ययविशेषजननैकस्वभावो विरुध्यते । यदि पुनः प्रत्ययविशेषादिकार्यभेदाद्द्रव्यगुणादिपदार्थनानात्वं व्यवस्थाप्यते तदा महेश्वरेच्छायाः सकृदनेकप्राण्युपभोगयोग्यकायादिकार्यनानात्वान्नानास्वभावत्वं कथमिव न सिध्येत् । यदि पुनरीश्वरेच्छाया नानासहकारिण एव नानास्वभावास्तद्व्यतिरेकेण भावस्य स्वभावायोगादिति मतं तदा स्वभावतद्वतो भेदैकांताभ्युपगम.स्यात् तस्मिंश्च स्वभाव तद्भावविरोधः सह्यविंध्यवदापनीपद्येत प्रत्यासत्तिविशेषान्नेवमिति चेत् कः पुनरसौ प्रत्यासत्तिविशेषः समवायिनां सहकारिणां समवायोऽसमवायिनां कार्यैकार्थसमवायः कार्यकारणैकार्थसमवायो वा निमित्तकारणानां तु कार्योत्पत्तावपेक्षा कर्तृसमवायिनी कर्मसमवायिनी वाऽपेक्ष्यमाणता प्रत्यासत्तिरितिचेत् ईश्वरोदिकालाकाशादीनि च सर्वकार्याणामुत्पादककारणस्वभावत्वं प्रतिपद्येरन् तस्य तेषां च तदुत्पत्तौ निमित्तकारणत्वात् । तथा सकलप्राण्यदृष्टानां कायादिकार्यसमवाय्यसमवायिकारणानां च महेश्वरस्वभावत्वं दुर्निवारं कायादिकार्य्योत्पत्तौ तत्सहकारित्वसिद्धेरिति सर्वमसमंजसमासज्येत नानास्वभावैकेश्वरतत्त्वसिद्धेः तथा च परमब्रम्हेश्वरइति नाममात्रं भिद्येत परमब्रह्मणएवैकस्य नानास्वभावस्य व्यवस्थितेः । स्यान्मतं कथमेकं ब्रह्म नानास्वभावयोगि भावांतराभावे भवेत्,भावांतराणामेव प्रत्यासत्तिविशिष्टानां स्वभावत्वादिति । तदप्यपेशलं । भावांतराणां स्वभावत्वे कस्यचिदेकेन स्वभावेन प्रत्यासत्तिविशेषेण प्रतिज्ञायमाने नानात्वविरोधात् । प्रत्यासत्तिविशेषैर्नानास्वभावैस्तेषां स्वभावत्वान्नानात्वे तेऽपि प्रत्यासत्तिविशेषाः स्वभावास्तद्वतोऽपरैः प्रत्यासत्तिविशेषाख्यैः स्वभावैर्भवेयुरित्यनवस्थाप्रसंगात् सुदूरमपि गत्वा स्वभाववतः स्वभावानां स्वभावांतरनिरपेक्षत्वे प्रथमेऽपि स्वभावाः स्वभावांतरनिरपेक्षाः प्रसज्येरन् । तथा च सर्वे सर्वस्य स्वभावा इति स्वभावसंकरप्रसंगः तं परिजिहीर्षता न स्वभावतद्वतोर्भेदैकांतोऽभ्युपगंतव्यः तदभेदैकांते च स्वभावानां तद्वति सर्वात्मनानुप्रवेशात्तदेवैकं तत्त्वं परमब्रह्मेति निगद्यमानं न प्रमाणविरुद्धं स्यात् तदप्यनिच्छता स्वभावतद्वतोः कथंचित्तादात्म्यमेषितव्यं । तथा चेश्वरेच्छायाः नानास्वभावाः कथंचित्तादात्म्यमनुभवंतोऽनेकांतात्मिकामीश्वरेच्छां साधयेयुः । तामप्यनिच्छतैकस्वभावेश्वरेच्छा प्रतिपत्तव्या, साचैकेन प्राण्यदृष्टेनाभिव्यक्ता तदेकप्राण्युपभोगयोग्यमेव कायादिकार्यं कुर्यात् ततो न सकृदनेककायादिकार्योत्पत्तिरिति न प्राण्यदृष्टनिमित्तेश्वरेच्छाऽभिव्यक्तिः सिध्येत् । एतेन पदार्थांतरनिमित्ताऽपीश्वरेच्छाऽभिव्यक्तिरपास्ता । स्यान्मतं महेश्वरेच्छाऽनभिव्यक्तैव कार्यजन्मनि निमित्तं,कर्मनिबंधनाया एवेच्छायाः क्वचिदभिव्यक्ताया निमित्वदर्शनात्तदिच्छायाः कर्मनिमित्तत्वाभावादिति । तदप्यसंबद्धं । कस्याश्चिदिच्छायाः सर्वथाऽनभिव्यक्तायाः क्वचित्कार्ये क्रियाहेतुत्वासिद्धेरज्ञजंतुवत् । कर्माभावेचेच्छायाः सर्वथाऽनुपपत्तेः । तथा हि विवादाध्यासितः पुरुषविशेषो नेच्छावान् निःकर्मत्वात् यो यो निःकर्मा स स नेच्छावान् यथामुक्तात्मा निःकर्माचायं तस्मान्नेच्छावानिति नेश्वरस्येच्छासंभवः तदभावे च न प्रयत्नः स्यात् तस्येच्छापूर्वकत्वात् तदभावे भावविरोधात् इति बुद्धीच्छाप्रयत्नमात्रादीश्वरोनिमित्तं कायादिकार्योत्पत्तौ कुंभाद्युत्पत्तौ कुंभकारवदिति न व्यवतिष्ठते । स्यादाकूतं ते विवादापन्नः पुरुषविशेषः प्रकृष्टज्ञानयोगी सदैवैश्वर्ययोगित्वात् यस्तु न प्रकृष्टज्ञानयोगी नासौ सदैवैश्वर्ययोगी यथा संसारी । मुक्तश्च सदैवैश्वर्ययोगी च भगवान् तस्मात्प्रकृष्टज्ञानयोगी सिद्धः । स च प्राणिनां भोगभूतये कायादिकार्योत्पत्तौ सिसृक्षावान् प्रकृष्टज्ञानयोगित्वात् यस्तु न

तथा स न प्रकृष्टज्ञानयोगी यथा संसारी । मुक्तश्च प्रकृष्टज्ञानयोगी चायं तस्मात्तथेति तस्येच्छावत्सिद्धिः । तथा च प्रयत्नवानसौ सिसृक्षावत्त्वात् । यो यत्र सिसृक्षावान् स तत्र प्रयत्नवान् दृष्टः यथा घटोत्पत्तौ कुलालः । सिसृक्षावांश्च तनुकरणभुवनादौ भगवान् तस्मात्प्रयत्नवानिति ज्ञानेच्छाप्रयत्नवत्त्वसिद्धेः । निःकर्मणोऽपि सदाशिवस्याशरीरस्यापि तन्वादिकार्योत्पत्तौ निमित्तकारणत्वसिद्धेर्मोक्षमार्गप्रणीतावपि तत्कारणत्वसिद्धिः बाधकाभावादिति । तदेतदप्यसमञ्जसं । सर्वथा निःकर्मणः कस्यचिदैश्वर्यविरोधात् । तथा हि विवादाध्यासितः पुरुषो नैश्वर्ययोगी निःकर्मकत्वात् यो यो निःकर्मा स स नैश्वर्ययोगी यथा मुक्तात्मा । निःकर्मा चायं तस्मान्नैश्वर्ययोगी । नन्वेनोमलैरेवासंस्पृष्टत्वादनादियोगजधर्मेण योगादीश्वरस्य निःकर्मत्वमसिद्धमिति चेत् न तर्हि सदामुक्तोऽसौ धर्माधर्मक्षयाच्च मुक्तिप्रसिद्धेः । शश्वत्क्लेशकर्मविपाकाशयैरपरामृष्टत्वादनादियोगजधर्मसंबंधेऽपि जीवन्मुक्तेरविरोधएव वैराग्यैश्वर्यज्ञानसंबंधेऽपि तदविरोधवदिति चेत् तर्हि परमार्थतो मुक्तामुक्तस्वभावता महेश्वरस्याभ्युपगता स्यात् तथा चानेकान्तसिद्धिर्दुर्निवारा । एतेनानादिशुद्धिसांसिद्धिकत्वयोगादीश्वरस्य धर्मज्ञानवैराग्यैश्वर्ययोगात् शश्वत्क्लेशकर्मविपाकाशयैरपरामृष्टत्वाच्च सदैव मुक्तस्य सदैवेश्वरस्य ब्रुवाणो नैकान्तमभ्यनुजानातीति निवेदितं प्रतिपत्तव्यं । कथंचिन्मुक्तत्वस्य कथंचिदमुक्तत्वस्य च प्रसिद्धेः । ततोऽनेकान्तात्मकत्वमपरिजिहीर्षुणा सर्वथा मुक्त एवेश्वरः प्रवक्तव्यः तथा च सर्वथा निःकर्मत्वं तस्योररीकर्तव्यमिति नासिद्धं साधनं । नाप्यनैकान्तिकं विपक्षे वृत्त्यसिद्धेः । कस्यचिदैश्वर्ययोगिनि त्रिदशेश्वरेऽस्मादौ सर्वथा निःकर्मत्वस्य वृत्त्यसिद्धेः तत एव न विरुद्धं । नापि कालात्ययापदिष्टं पक्षस्य प्रमाणेनाबाधनात् । न हि प्रत्यक्षतोऽस्मदादिभिरैश्वर्ययोगी कश्चिन्निःकर्मोपलभ्यते यतः प्रत्यक्षबाधितः पक्षः स्यात् । नाप्यनुमानतस्तत्र सर्वस्यानुमानस्य व्यापकानुपलम्भेन बाधितपक्षस्य कालात्ययापदिष्टत्वसाधनात् । नाप्यागमतस्तस्योपलम्भस्तत्र तस्य युक्त्याननुगृहीतस्य प्रामाण्यविरोधात् । तदनुग्राहिकाया युक्तेरसंभवादेव युक्त्यनुगृहीतस्यापि न तत्रागमस्य संभावना यतः प्रामाण्येनाबाध्यमानः पक्षो न सिद्ध्येत् हेतोश्च कालात्ययापदिष्टत्वपरिहारो न भवेत् । एतेन सत्प्रतिपक्षत्वं साधनस्य निरस्तं । प्रतिपक्षानुमानस्य निरवद्यस्य सर्वथाभावसाधनात् । तदेवमस्मादनुमानादैश्वर्यविरहसाधने महेश्वरस्येच्छाप्रयत्नविरहोऽपि साधितः स्यात् धर्मविरहवत् । यथैव हि निःकर्मत्वमैश्वर्यविरहं साधयति तथेच्छाप्रयत्नमपि तस्य तेन व्याप्तिसिद्धेः । कस्यचिदिच्छावतः प्रयत्नवतश्च परमैश्वर्ययोगिनोऽपीन्द्रादेर्निःकर्मत्वविरोधसिद्धेः । ज्ञानशक्तिस्तु निःकर्मणोऽपि कस्यचिन्न विरुध्यते चेतनात्मवादिभिः केश्चिदशेषविकल्पसिद्धावस्थामभ्युपगच्छद्भिर्मुक्तात्मन्यपि चेतनायाः प्रतिज्ञानात् । चेतना च ज्ञानशक्तिरेव न पुनस्तद्व्यतिरिक्ता चिच्छक्तिरपरिणामिन्यप्रतिसंक्रमाऽदर्शितविषया शुद्धा चाऽनन्ता च यथा कापिलैरुपवर्ण्यते तस्याः प्रमाणविरोधात् तथा च महेश्वरस्य कर्मभिरस्पृष्टस्यापि ज्ञानशक्तिशरीरस्यापि च मुक्तात्मन इव प्रसिद्धा तत्सिद्धौ च ।

ज्ञानशक्त्यैव निःशेषकार्योत्पत्तौ प्रभुः किल ।
सदेश्वर इति स्यानेऽनुमानमनिदर्शनं ॥ १२ ॥

न हि कश्चित्कस्यचित्कार्योत्पत्तौ ज्ञानशक्त्यैव प्रभुरुपलब्धः यतो विवादाध्यासितः पुरुषो ज्ञानशक्त्यैव सर्वकार्याण्युत्पादयति प्रभुत्वादित्यनुमानमनुदाहरणं न भवेत् । ननु साधर्म्योदाहरणाभावेऽपि वैधर्म्योदाहरणसंभवान्नानुदाहरणमिदमनुमानं । तथा हि यस्तु ज्ञानशक्त्यैव न कार्यमुत्पादयति स न प्रभुः यथा संसारी कर्मपरतंत्र इति वैधर्म्येण निदर्शनं संभवत्येवेति न मन्तव्यं । साधर्म्योदाहरणविरहेऽन्वयनिर्णयाभावाद्व्यतिरेकनिर्णयस्य विरोधात् । तथा शक्यादर्शनेच्छाप्रयत्नविशेषै

स्वकार्यं कुर्वतः प्रभुत्वेन व्यभिचाराच्च नहींद्रो ज्ञानशक्त्यैव स्वकार्यकृत्ते तस्येच्छाप्रयत्नयोरपि भावात् नचास्य प्रभुत्वमसिद्धं प्रभुत्वसामान्यस्य सकलामरविषयस्य स्वातंत्र्यलक्षणस्यापि सद्भावात् ॥ प्रतिवादि प्रसिद्धमपि निदर्शनमनूद्य निराकुर्वन्नाह —

समीहामंतरेणापि यथावक्ति जिनेश्वरः ।
तथेश्वरोऽपि कार्याणि कुर्यादित्यप्यपेशलं ॥ १३ ॥

सति धर्मविशेषे हि तीर्थकृत्त्वसमाह्वये ।
ब्रूयाज्जिनेश्वरो मार्गं न ज्ञानादेव केवलात् ॥ १४ ॥

सिद्धस्यापास्तनिःशेषकर्मणे वागसंभवात् ।
विना तीर्थकरत्त्वेन नाम्ना नार्थोपदेशना ॥ १५ ॥

महेश्वरः समीहामंतरेणापि प्रयत्नं च ज्ञानशक्त्यैव मोक्षमार्गप्रणयनं तन्वादिकार्यं च कुर्वीत महेश्वरत्वात् यथा प्रतिवादिप्रसिद्धो जिनेश्वरः प्रवचनोपदेशमिति प्रतिवादिप्रसिद्धमपि निदर्शनमनुमानस्य नोपपद्यते स्याद्वादिभिः प्रतिज्ञायमानस्य जिनेश्वरस्य ज्ञानशक्त्यैव प्रवचनलक्षणकार्यकारणासिद्धेः सत्येव तीर्थकरत्वनामपुण्यातिशये दर्शनविशुद्ध्यादिभावनाविशेषनिबंधने समुत्पन्नकेवलज्ञानस्योदय प्राप्ते प्रवचनाख्यतीर्थकरणप्रसिद्धेः । प्रक्षीणाशेषकर्मणः सिद्धस्य वाक्प्रवृत्तेरसंभवात्तीर्थकरत्वनामपुण्यातिशयापाये केवलिनोऽपि वाक्प्रसिद्ध्यसंभववत् ? इति धर्मविशेषविशिष्टएवोत्तमसंहननशरीरः केवली प्रवचनाख्यतीर्थस्य कर्ताप्रसिद्ध इति कथमसौ निदर्शनं महेश्वरस्यापि ॥ १६ ॥

तथा धर्मविशेषोऽस्य योगश्च यदि शाश्वतः ।
तदेश्वरस्य देहोऽस्तु योग्यंतरवदुत्तमः ॥ १६ ॥

यस्य हि धर्मविशेषो योगविशेषश्च महर्षियोगिनः प्रसिद्धः तस्य देहोऽप्युत्तम एवायोगिजनदेहाद्विशिष्टः प्रसिद्धःस्तथा महेश्वरस्यापि देहेनोत्तमेन भवितव्यं तमंतरेण धर्मविशेषस्य योगविशेषस्य वाऽनुपपत्तिरैश्वर्यायोगाद्वैराग्यायोगवत् । कुतोजगन्निमित्तकरणत्वं सिद्धवदज्ञजंतुवन्मुक्तात्मवच्च मतांतरमाशंक्य निराकुर्वन्नाह ।

निग्रहानुग्रहौ देहं स्वं निर्मायान्यदेहिनां ।
करोतीश्वर इत्येतन्नपरीक्षाक्षमं वचः ॥ १७ ॥

कस्यचिद्दुष्टस्य निग्रहं शिष्टस्य चानुग्रहं करोतीश्वरः प्रभुत्वात् लोकप्रसिद्धप्रभुवत् । न चैवं नानेश्वरसिद्धिः नानाप्रभूणामेकमहाप्रभुतंत्रत्वदर्शनात् । तथा हि विवादाध्यासिता नानाप्रभव एक महाप्रभुतंत्रा एव नानाप्रभुत्वात् ये ये नानाप्रभवस्ते ते अत्रैकमहाप्रभुतंत्रा दृष्टाः यथा सामंत मांडलिकादय एकचक्रवर्तितंत्राः प्रभवश्चैते नानाचक्रवर्तींद्रादयः तस्मादेकमहाप्रभुतंत्रा एव योऽसौ महाप्रभुः स महेश्वर इत्येकेश्वरसिद्धिः । स च स्वदेहनिर्माणकरोऽन्यदेहिनां निग्रहानुग्रहकरत्वात् यो योऽन्यदेहिनां निग्रहानुग्रहकरः स स्वदेह निर्माणकरो दृष्टो यथा राजा । तथा चायमन्यदेहिनां निग्रहानुग्रहकरः तस्मात्स्वदेहनिर्माणकर इति सिद्धं । तथा सति स्वं देहं निर्मायान्यदेहिनां निग्रहानुग्रहौ करोतीश्वर इति केषांचित् वचः तच्च न परीक्षाक्षमं महेश्वरस्याशरीरस्य स्वदेहनिर्माणानुपपत्तेः तथा हि ।

देहांतराद्विना तावत्स्वदेहं जनयेद्यदि ।
तदा प्रकृतकार्येऽपि देहाधानमनर्थकं ॥ १८ ॥
देहांतरात्स्वदेहस्य विधाने चानवस्थितिः ।
तथा च प्रकृतं कार्यं कुर्यादीशो न जातुचित् ॥ १९ ॥

यदि हीश्वरो देहांतराद्विनाऽपि स्वदेहमनुध्यानमात्रादुत्पादयेत्तदाऽन्यदेहिनां निग्रहानुग्रहलक्षणं कार्यमपि प्रकृतं तथैव जनयेदिति तज्जननदेहाधानमनर्थकं स्यात्। यदि पुनर्देहांतरादेव स्वदेहं विदधीत तदा तदपि देहांतरमन्यस्माद्देहादित्यनवस्थितिः स्यात्, तथा चापरापरदेहनिर्माण एवोपक्षीणशक्तिकत्वात् न कदाचित्प्रकृतं कार्यं कुर्यादीश्वरः यथैव हि प्रकृतकार्यजननायापूर्वं शरीरमीश्वरो निष्पादयति तथैव तच्छरीरनिष्पादनायापूर्वं शरीरांतरं निष्पादयेदिति कथमनवस्था विनिवार्येत, न हि केषांचित्प्राणिनां निग्रहानुग्रहकरणात्पूर्वं शरीरमीश्वरस्य प्रयुज्यते ततोऽपि पूर्वं शरीरांतरप्रसंगात्। अनादिशरीरसंततिसिद्धेरशरीरत्वविरोधात्। न चैकेन निर्माणशरीरेण नानादिग्देशवर्तिप्राणिविशेषनिग्रहानुग्रहविधानमीश्वरस्य घटते, यतो युगपन्नानानिर्माणशरीराणि तस्य न स्युः तदभ्युपगमे च तन्निर्माणाय नानाशरीरांतराणि भवेयुरित्यनादिनानाशरीरसंततयः कथमीश्वरस्य न प्रसज्येरन्। यदि पुनरेकेन शरीरेण नाना स्वशरीराणि कुर्वीत युगपत्क्रमेण वा तदैकेनैव देहेन नानादिग्देशवर्तिप्राणिगणनिग्रहानुग्रहावपि तथैव कुर्वीत। तथा च कणादग्रहासुराद्यनुग्रहनिग्रहविधानायोत्कल्पिततदनुरूपशरीरनानात्वकथनं न युक्तिपथमवतरति स्यात्। यदि पुनर्न देहांतराद्विना स्वदेहं जनयेत्, नापि देहांतरात्, स्वयमीश्वरस्य सर्वथा देहाविधानादिति मतं तदपि दूषयन्नाह—

स्वयं देहाविधाने तु तेनैव व्यभिचारिता ।
कार्यत्वादेः प्रयुक्तस्य हेतोरीश्वरसाधने ॥ २० ॥

यदि हीश्वरो न स्वयं स्वदेहं विधत्ते तदाऽसौ तद्देहः किं नित्यः स्यादनित्यो वा न तावन्नित्यः सावयवत्वात्। यत्सावयवं तदनित्यं दृष्टं यथा घटादि। सावयवश्चेश्वरदेहस्तस्मान्न नित्य इति बाधकसद्भावात्। यदि पुनरनित्यः तदा कार्योऽसौ कुतः प्रादुर्भवेत्। महेश्वरधर्मविशेषादेवेति चेत् तर्हि सर्वप्राणिनां शुभाशुभशरीरादिकार्यं तद्धर्माधर्मेभ्य एव प्रादुर्भवेदिति, किं कृतमीश्वरेण निमित्तकारणतया परिकल्पितेन। तथा च विवादापन्नं तनुकरणभुवनादिकं बुद्धिमन्निमित्तकं कार्यत्वात् स्वारंभकावयवसन्निवेशविशिष्टत्वादचेतनोपादानत्वादित्यादेर्हेतोरीश्वरसाधनाय प्रयुक्तस्येश्वरदेहेन व्यभिचारिता स्यात् तस्यानीश्वरनिमित्तत्वेऽपि कार्यत्वादिसिद्धेरिति ततो नेश्वरसिद्धिः संभाव्यते। सांप्रतं शंकरमतमाशंक्य दूषयन्नाह—

यथाऽनीशः स्वदेहस्य कर्ता देहांतरान्मतः ।
पूर्वस्मादित्यनादित्वान्नानवस्था प्रसज्यते ॥ २१ ॥
तथेशस्यापि पूर्वस्माद्देहाद्देहांतरोद्भवात् ।
नानवस्थेति यो ब्रूयात्तस्याऽनीशत्वमीशितुः ॥ २२ ॥
अनीशः कर्मदेहेनाऽनादिसंतानवर्तिना ।
यथैव हि सकर्मास्तद्वन्न कथमीश्वरः ॥ २३ ॥

---

१ चिंतनमात्रात्।

न ह्यनीशः स्वशरीरस्य शरीरांतरेण विना कर्ता प्रतिवादिनः सिद्धोयमुदाहरणीकृत्याशरीरस्यापीशस्य स्वशरीरनिर्माणाय सामर्थ्यं समर्थ्यते अनवस्था चापाद्यमाना निषिध्यते । पूर्वपूर्वशरीरापेक्ष्यापि तदुत्तरोत्तरशरीरकरणे । किं तर्हि कार्मणशरीरेण सशरीर एवानीशः शरीरांतरमुपभोगयोग्यं निष्पादयतीति परस्य सिद्धांतः तथा यदीशः पूर्वकर्मदेहेन स्वदेहमुत्तरं निष्पादयेत्तदा सकर्मैव स्यात् न शश्वत्कर्मभिरस्पृष्टः सिद्ध्येत्तस्यानीशवदनादिसंतानवर्तिना कर्मशरीरेण संबंधसिद्धेः । सकलकर्मणोऽप्यपाये स्वशरीरकरणायोगान्मुक्तवत् सर्वथा निःकर्मणोबुद्धीच्छाद्वेषप्रयत्नासंभवस्यापि साधनात् ॥

ततो नेशस्य देहोऽस्ति प्रोक्तदोषानुषंगतः ।
नापि धर्मविशेषोऽस्य देहाभावे विरोधतः ॥ २४ ॥
येनेच्छामंतरेणापि तस्य कार्ये प्रवर्तनं ।
जिनेंद्रवद् घटेतेति नोदाहरणसंभवः ॥ २५ ॥

इत्युपसंहारश्लोकौ । सांप्रतमशरीरस्य सदाशिवस्य यैर्ज्ञानमभ्युपगतं त एव प्रष्टव्याः किमीशस्य ज्ञानं नित्यमनित्यं चेति पक्षद्वयेऽपि दूषणमाह—

ज्ञानमीशस्य नित्यं चेदशरीरस्य न क्रमः ।
कार्याणामक्रमाद्धेतोः कार्यक्रमविरोधतः ॥ २६ ॥

ननु च ज्ञानस्य महेश्वरस्य नित्यत्वेऽपि नाक्रमत्वं निरन्वयक्षणिकस्यैवाक्रमत्वात् कालांतर देशांतरप्राप्तिविरोधात् कालापेक्षस्य देशापेक्षस्य च क्रमस्यासंभवात् । संतानस्याप्यवस्तुत्वात् परमार्थतः क्रमवत्त्वानुपपत्तेः कूटस्थनित्यवत् न हि यथा सांख्याः कूटस्थं पुरुषमामनंति तथा वयमीश्वर ज्ञानं मन्यामहे तस्य सातिशयनित्यत्वात्क्रमोपपत्तेः निरतिशयं हि पुरुषतत्त्वं प्रतिसमयं स्वरूपेणैवास्तीति शब्दज्ञानानुपातिना विकल्पेन वस्तुशून्येन पूर्वमासीदिदानीमस्ति पश्चाद्भविष्यतीति क्रमवादेष लोकैर्व्यवहारपदवीमानीयत इति न परमार्थतः क्रमवत्त्वं तस्य सांख्यैरभिधीयते न च क्रमेणानेक कार्यकारित्वं तस्याकर्तृत्वात्सदोदासीनतयाऽवस्थितत्वात् । न च क्रमणाक्रमेण चार्थक्रियापाये तस्यावस्तुत्वमिति केषांचिद् दूषणमवकाशं लभते । वस्तुनोऽर्थक्रियाकारित्वलक्षणाप्रतिष्ठानात् । अन्यथोदासीनस्य किंचिदकुर्वतो वस्तुत्वाभाव प्रसंगात् । सत्ताया एव वस्तुलक्षणोपपत्तेरभावस्यापि वस्त्वंतर स्वभावस्य पुरुषतत्त्वस्य इव स्वसत्तानतिक्रमाद्वस्तुत्वाविरोधात् सामान्यादेरपि स्वरूपसत्त्वस्य वस्तुलक्षणस्याभ्युपगमात् । न किंचिद्वस्तु सत्तालक्षणं व्यभिचरतीति कापिलानां दर्शनं । न पुनर्वैशेषिकाणां ईश्वरज्ञानस्योदासीनस्य कल्पने तत्कल्पनावैयर्थ्यप्रसंगात् कार्यकारिणैव तेन भवितव्यं यच्च कार्यकारि तत्सातिशयमेव युक्तं । न चैवं परिणामिनित्यता ज्ञानस्य सांख्यपरिकल्पितप्रधानवत्प्रसज्यते, तदतिशयानां क्रमभुवां ततो भिन्नत्वात्, तदभेदेऽतिशयानामिवेश्वरज्ञानस्यापि नाशोत्पादप्रसंगात् । ईश्वरज्ञानवद्वा तदतिशयानामनुत्पादविनाशधर्मकत्वप्रसंगात् । तदेवमीश्वरज्ञानं क्रमणानेकातिशय संपाते क्रमवदेव । क्रमवतश्चेश्वरज्ञानात्कार्याणां क्रमो न विरुध्यत एव, सर्वथाप्यक्रमादेव हेतोः कार्य क्रमविरोधसिद्धेः । एतेन सांख्यैः परिकल्प्यमानस्य पुरुषस्य निरतिशयस्य सर्वदोदासीनस्य वैयर्थ्यमापादितमिति बोद्धव्यं । वैशेषिकाणामात्मादिवस्तुनो नित्यस्याप्यर्थांतरभूतैरतिशयैः सातिशयत्वोपगमात्सर्वदोदासीनस्य कस्यचिदप्रतिज्ञानादिति केचिदाचक्षते । तेऽप्येवं प्रष्टव्याः कथमीश्वरस्य ज्ञानस्य ततोऽर्थांतरभूतानामतिशयानां क्रमवत्त्वे वास्तवं क्रमवत्त्वं सिद्ध्येत्, तेषां तत्र समवायादिति चेत् समानः पर्यनुयोगः कथमर्थांतरभूतानामतिशयानामीश्वरज्ञान एव समवायो न पुनरन्यत्रेति तत्रैवेहेदमिति प्रत्ययविशेषोत्पत्तेरिति चेत् ननु स एवेहेदमिति प्रत्ययविशेषः कुतोऽन्यत्रापि न स्यात् सर्वथा

१ किंचिद्ज्ञः । २ जैनस्य । ३ सांख्यैरप्रतिपादनात् ४ : बौद्धादीनां । ५ कस्यचिदपे ।

विशेषाभावात् । यथैव हि, इह महेश्वरज्ञानेऽतिशया इति तत्रोऽर्थान्तरभाविनोऽपि प्रतीयन्ते तथेह घटे तेऽतिशया प्रतीयन्ताम् । तत्रैव तेषां समवायादिदमिति प्रत्ययविशेषो न पुनरन्यत्रेति चेत् सोयमन्योन्यसंश्रयः । सतीहेदमिति प्रत्ययविशेषेऽतिशयानामीश्वरज्ञान एव समवायः सिद्ध्यन् तत्रैव तेषां समवायादिहेदमिति प्रत्ययविशेषो नियम्यत इति नैकस्यापि प्रसिद्धिः । भवतु वा तेषां तत्र समवायः, स तु क्रमेण युगपद्वा, क्रमेण चेत् कथमक्रममीश्वरज्ञानं क्रमभाव्यनेकातिशयसमवायं क्रमेण प्रतिपद्यत इति दुरवबोधं, क्रमवर्तिभिरतिशयान्तरैरीश्वरज्ञानस्य क्रमवत्त्वसिद्धेरदोषोऽयमिति चेत् ननु तान्यप्यन्यान्यतिशयान्तराणीश्वरज्ञानादर्थान्तरभूतानि कथं तस्य क्रमवत्तां साधयेयुरति प्रसङ्गात् । तेषां तत्र समवायादिति चेत् स तर्हि तत्समवायः क्रमेण युगपद्वेत्यनिवृत्तः पर्यनुयोगोऽनवस्था च । यदि पुनर्युगपदीश्वरज्ञानेऽतिशयानां समवायस्तदा तन्निबन्धनोऽपि तस्य क्रमो दूरोत्सारित एव तेषामक्रमत्वादिति सिद्धमस्यापीश्वरज्ञानस्याक्रमत्वसिद्धिः । तथा चाक्रमादीश्वरज्ञानात्कार्याणां क्रमो न स्यादिति सूक्तं दूषणम् । किं च तदीश्वरज्ञानं प्रमाणं स्यात्फलं वा पक्षद्वयेऽपि दोषमादर्शयन्नाह —

तद्बोधस्य प्रमाणत्वे फलाभावः प्रसज्यते ।
ततः फलावबोधस्यानित्यस्येष्टौ मतक्षतिः ॥ २७ ॥
फलत्वे तस्य नित्यत्वं न स्यान्मानात्समुद्भवात् ।
ततोऽनुद्भवने तस्य फलत्वं प्रतिहन्यते ॥ २८ ॥

नेश्वरज्ञानं नित्यं प्रमाणं सिद्ध्यत् तस्य फलाभावात् । फलज्ञानस्यानित्यस्य परिकल्पने च महेश्वरस्य नित्यानित्यज्ञानद्वयपरिकल्पनायां सिद्धान्तविरोधात् । फलमेवेश्वरज्ञानस्य नित्यत्वं न स्यात् प्रमाणतस्तस्य समुद्भवात् । ततोऽनुद्भवे तस्य फलत्वविरोधात् नित्यमीश्वरज्ञानमभ्युपगमनीयं तस्य निरवद्यत्वोपायानुपयोगेन निरस्तत्वात् । किं तर्ह्यनित्यमेवेश्वरज्ञानमित्यपरे । तन्मतमनूद्य निराकुर्वन्नाह—

अनित्यत्वे तु तज्ज्ञानस्यानेन व्यभिचारिता ।
कार्यत्वादेर्महेशेनाकरणेऽस्य स्वबुद्धितः ॥ २९ ॥
बुद्ध्यन्तरेण तद्बुद्धेः करणे चानवस्थितिः ।
नानादिसंततिर्युक्ता कर्मसंतानतो विना ॥ ३० ॥

अनित्यं हीश्वरज्ञानमीश्वरबुद्धिकार्यं यदि नेष्यते तदा तेनैव कार्यत्वादिहेतूनां बुद्धिमत्कारणत्वे साध्येऽनैकान्तिकत्वं स्यात् । यदि पुनर्बुद्ध्यन्तरेण स्वबुद्धिमीश्वरः कुर्वीत तदा परापरबुद्धिप्रतीक्षायामेवोपक्षीणशक्तित्वादीश्वरस्य प्रकृतबुद्धेः करणं न स्यादनवस्थानात् । स्यान्मतं प्रकृतबुद्धेः करणं नापूर्वबुद्ध्यन्तरं प्रतीक्षते महेशः । किं तर्हि पूर्वोत्पन्नां बुद्धिमाश्रित्य प्रकृतां बुद्धिं कुरुते तामपि तत्पूर्वबुद्धिमित्यनादिर्बुद्धिसंततिरीश्वरस्य ततो नानवस्थेति । तदप्यसत् । तथा बुद्धिसंतानस्य कर्मसंतानापायेऽसंभवात् । कर्मजन्मा हि बुद्धिः परापरतत्त्वोपलम्भविशेषस्य प्रमादुत्पद्यते नान्यथा । यदि पुनर्योगजधर्मसंतानादीश्वरस्य प्रज्ञातिशयधर्मभुपालम्भः पूर्वस्मात् समाधिविशेषाद्धर्मस्यादृष्टविशेषस्योत्पादात्ततो बुद्धिविशेषस्य प्रादुर्भावादुपसंतानिबन्धनाया एव बुद्धिसंततेरभ्युपगमादिति मतं तदापि कथमीश्वरस्य सकर्मता न सिद्ध्येत् । तत्सिद्धौ च सशरीरत्वेऽपि कथमस्य न स्यात् तस्यां च सत्यां न सदा मुक्तिस्तस्य सिद्ध्येत् । संसारमुक्ते तदसिद्धौ देहेन च कार्यत्वादेः साधनस्य तन्वादेर्बुद्धिमत्कारणत्वे साध्ये कथमनैकान्तिकता परिहर्तुं शक्यते तस्य बुद्धिमत्कारणत्वासंभवात् । संभवे चासदभ्युपगमादिति प्रागेवोक्तम् । किं चेदं विचार्यते किमीश्वरज्ञानमव्यापि किं वा व्यापीति प्रथमपक्षे दूषणमाह।

---

१ महात । २ जीवन्मुक्ते । ३ मिथ्यात्वे । ४ जीवन्मुक्तदेहेन ।

अव्यापि च यदि ज्ञानमीश्वरस्य तदा कथं ।
सकृत्सर्वत्र कार्याणामुत्पत्तिर्घटते ततः ॥ ३१ ॥
यद्येकत्र स्थितं देशे ज्ञानं सर्वत्र कार्यकृत् ।
तदा सर्वत्र कार्याणां सकृत् किं न समुद्भवः ॥ ३२ ॥
कारणांतरवैकल्यात्तथाऽनुत्पत्तिरित्यपि ।
कार्याणामीश्वरज्ञानाहेतुकत्वं प्रसाधयेत् ॥ ३३ ॥
सर्वत्र सर्वदा तस्य व्यतिरेकाप्रसिद्धितः ।
अन्वयस्यापि संदेहात्कार्यं तद्धेतुकं कथं ॥ ३४ ॥

तदीश्वरज्ञानं तावदव्यापीष्टं प्रादेशिकत्वात् सुखादिवत् । प्रादेशिकमीश्वरज्ञानं विभुद्रव्यविशेषगुणत्वात् यदित्थं तादित्थं यथा सुखादि तथा चेश्वरज्ञानं तस्मात्प्रादेशिकमिति नासिद्धं प्रादेशिकत्वं साधनं, न च तत्साधनस्य हेतोः सामान्यगुणेन संयोगादिना व्यभिचारो, विशेषग्रहणात् । तथापि विशेषगुणेन-रूपादिनाऽनैकांतिक इति न मंतव्यं विभुद्रव्यग्रहणात् । तथापीष्टविरुद्धस्यानित्यत्वस्य साधनात् विरुद्धो हेतुः विभुद्रव्यविशेषगुणत्वस्यानित्यत्वेन व्याप्तत्वात्, यथाहीदं विभुद्रव्यविशेषगुणत्वं प्रादेशिकत्वमीश्वरज्ञानस्य साधयेत् तद्वदनित्यत्वमपि तदव्यभिचारात् न हि, कश्चिद्विभुद्रव्यविशेषगुणो नित्यो दृष्ट इत्यपि नाशंकनीयं महेश्वरस्यास्मद्विशिष्टत्वात् तद्विज्ञानस्यास्मद्विलक्षणत्वात् । न ह्यस्मदादिविज्ञाने यो धर्मो दृष्टः स महेश्वरविज्ञानेऽप्यापादयितुं युक्तोऽतिप्रसंगात् । तस्यास्मदादिविज्ञानवत् समस्तार्थपरिच्छेदकत्वाभावप्रसक्तेः सर्वत्रास्मदादिबुद्ध्यादीनामेवानित्यत्वेन व्याप्तस्य विभुद्रव्यविशेषगुणत्वस्य प्रसिद्धेः विभुद्रव्यस्य वा महेश्वरस्यैवाभिप्रेतत्वात्, तेन यदुक्तं भवति महेश्वरविशेषगुणत्वात् तदुक्तं भवति विभुद्रव्यविशेषगुणत्वादिति ततोनेष्टविरुद्धसाधनो हेतुर्यतोविरुद्धः स्यात् । न चैवमुदाहरणानुपपत्तिरीश्वरसुखादेरेवोदाहरणत्वात् तस्यापि प्रादेशिकत्वात् साध्यवैकल्याभावात् महेश्वरविशेषगुणत्वाच्च साधनवैकल्यासंभवात् ततोऽस्माद्धेतोरीश्वरज्ञानस्य सिद्धं प्रादेशिकत्वं । ततश्चाव्यापि तदिष्टं यदि वैशेषिकैस्तदा कथं सकृत्सर्वत्र तन्वादिकार्याणामुत्पत्तिरीश्वरज्ञानाद् घटते ताद्धि निमित्तकारणं सर्वकार्योत्पत्तौ सर्वत्रासन्निहितमपि कथमुपपद्यते कालादेर्व्यापिन एव युगपत् सर्वत्र कार्योत्पत्तौ निमित्तकारणत्वप्रसिद्धेः । विभोरीश्वरस्य निमित्तकारणत्वप्रसिद्धेः विभोरीश्वरस्य निमित्तकारणत्ववचनाददोष इति चेन्न तस्य यत्र प्रदेशेषु बुद्धिस्तत्रैव निमित्तकारणत्वोपपत्तेर्बुद्धिशून्येऽपि प्रदेशांतरे तस्य निमित्तकारणत्वेन तत्र कार्याणां बुद्धिमन्निमित्तत्वं सिद्ध्येत् तथा च व्यर्थं बुद्धिमन्निमित्तत्वसाधनं सर्वत्र कार्याणां बुद्धिमदभावेऽपि भावापत्तेः । न चैवं कार्यत्वादयो हेतवो गमकाः स्युर्बुद्धिशून्येश्वरप्रदेशवर्तिभिरबुद्धिमन्निमित्तैः कार्यादिभिर्व्यभिचारात् । ततस्तेषां बुद्धिमन्निमित्तत्वासिद्धेः । स्यान्मतं प्रदेशवर्तिनाऽपि ज्ञानेन महेश्वरस्य युगपत्समस्तकारकपरिच्छेदासिद्धेः सर्वकार्योत्पत्तौ युगपत्सकलकारकप्रयोक्तृत्वव्यवस्थितेः निखिलतन्वादिकार्याणां बुद्धिमन्निमित्तत्वोपपत्तेः नोक्तदोषोऽनुप्रसज्यत इति । तदप्यसम्यक् । क्रमेणानेकतन्वादिकार्यजन्मनि तस्य निमित्तकारणत्वायोगात् । ज्ञानं हीश्वरस्य यद्येकत्र प्रदेशे वर्तमानं समस्तकारकशक्तिसाक्षात्करणात् समस्तकारकप्रयोक्तृत्वसाधनात् सर्वत्र परंपरया कार्यकारीष्यते तदा युगपत्सर्वकार्याणां सर्वत्र किं न समुद्भवः प्रसज्यते, यतो महेश्वरस्य प्राक् पश्चाच्च कार्योत्पत्तौ निमित्तकारणत्वाभावो न सिद्ध्येत् । समर्थेऽपि सति निमित्तकारणे कार्यानुत्पादविरोधात् । स्यान्मतं न निमित्तकारणमात्रात्तन्वादिकार्याणामुत्पत्तिः समवाय्यसमवायिनिमित्तकारणांतराणामपि

सद्भावे कार्योत्पत्तिदर्शनात् न च सर्वकार्याणां युगपत्समवाय्यसमवायिनिमित्तकारणसद्भाव क्रमेणैव तत्प्रसिद्धेः । ततः कारणान्तराणां वैकल्यात् तथा युगपत्सर्वत्र कार्याणामनुत्पत्तिरिति । तदपि कार्याणां मीश्वरज्ञानहेतुकत्वं साधयेत् । तदन्वयव्यतिरेकासिद्धेः सत्यपीश्वरज्ञाने केषांचित्कार्याणां कारणान्तराभावेऽनुत्पत्तेः कारणान्तरसद्भाव एवोत्पत्तेः कारणान्तरान्वयव्यतिरेकानुविधानस्यैव सिद्धेः तत्कार्यत्वस्यैव व्यवस्थानात् । ननु च सत्येव ज्ञानवति महेश्वरे तन्वादिकार्याणामुत्पत्तेरन्वयोऽस्त्येव । व्यतिरेकोऽपि विशिष्टावस्थापेक्षया महेश्वरस्य सिद्ध एव कार्योत्पादनसमर्थकारणान्तरासन्निधानविशिष्टेश्वरेऽसति कार्याणामनुत्पत्तेः व्यतिरेकनिश्चयात् । सर्वत्रावस्थापेक्षयैवावस्थावतोऽन्वयव्यतिरेकप्रतीते । अन्यथा तदसंभवप्रसंगात् । न ह्यवस्थांतरे सति कार्योत्पत्तिरिति वक्तुं शक्यं सर्वावस्थासु तस्मिन्सति तदुत्पत्तिप्रसंगात् । नाप्यवस्थावतोऽसंभवे कार्येऽस्यासंभवः सुशको वक्तुं तस्य नित्यत्वादभावानुपपत्तेः । द्रव्यावस्थाविशेषाभावे तु तत्साध्यकार्यविशेषानुत्पत्तेः सिद्धो व्यतिरेकोऽन्वयवत् । न चावस्थावतो द्रव्यस्यानाद्यनन्तस्योत्पत्तिविनाशशून्यस्यापह्नवो युक्तः तस्याबाधितान्वयज्ञानसिद्धत्वात् तदपह्नवे सौगतमतप्रवेशानुषंगात् । कुतः स्याद्वादिनामिष्टसिद्धिरिति कश्चिद्वैशेषिकमतमनुमन्यमानः समभिधत्ते । सोऽप्येवं प्रष्टव्यः किमवस्थावतोऽवस्था पदार्थान्तरभूता किं वा नेति । प्रथमकल्पनायां कथमवस्थापेक्षयाऽन्वयव्यतिरेकानुविधानं तन्वादिकार्याणामीश्वरान्वयव्यतिरेकानुविधानं युज्यते, धूमस्य पावकान्वयव्यतिरेकानुविधाने पर्वतान्वयव्यतिरेकानुविधानप्रसंगात् । पदार्थान्तरत्वाविशेषात् यथैव हि पर्वतात् पावकस्य पदार्थान्तरत्वं तथेश्वरात्कारणान्तरसन्निधानस्यावस्थाविशेषस्यापि सर्वथा विशेषाभावात् । यदि पुनरीश्वरस्यावस्थातो भेदेऽपि तेन सम्बन्धसद्भावात् तदन्वयव्यतिरेकानुविधानं कार्याणामीश्वरान्वयव्यतिरेकानुविधानमेवेति मन्यते तदा पर्वतादेः पावकेन सम्बन्धात्पावकान्वयव्यतिरेकानुविधानमपि धूमस्य पर्वताद्यन्वयव्यतिरेकानुविधानमनुमन्यतां पावकविशिष्टपर्वताद्यन्वयव्यतिरेकानुकरणं धूमस्यानुमन्यते एव तदवस्थाविशिष्टेश्वरान्वयव्यतिरेकानुकरणं तन्वादिकार्याणां युक्तमनुमन्तुमिति चेन्न पर्वतादिवदीश्वरस्य भेदप्रसंगात् । यथैव हि पावकविशिष्टपर्वतादेरन्यः पावकाविशिष्टपर्वतादिः सिद्धः तद्वत्कारणान्तरसन्निधानलक्षणावस्थाविशिष्टादीश्वरात्पूर्वं तदविशिष्टेश्वरोऽन्यः कथं न प्रसिद्ध्येत् । स्यान्मतं द्रव्याद्यनेकविशेषणविशिष्टस्यापि सत्तासामान्यस्य यथा न भेदः समवायस्य वाऽनेकसमवायिविशेषणविशिष्टस्याप्येकत्वमेव तद्वदनेकावस्थाविशिष्टस्यापीश्वरस्य न भेदः सिद्ध्येत् तदेकत्वस्यैव प्रमाणतः सिद्धेरिति तदेतदसमीक्षिताभिधानं । सत्तासामान्यसमवाययोरपि सविशेषणभेदात्प्रसिद्धेरभ्युपगन्तव्यत्वात् । तस्यैकानेकस्वभावतयैव प्रमाणगोचरचारित्वात् । एतेन नानामूर्तिमद्द्रव्यसंयोगविशिष्टस्य व्योमात्मादिविभुद्रव्यस्याभेदः प्रत्याख्यातः सविशेषणभेदात्संप्रत्ययादेकानेकस्वभावव्यवस्थानात् । योऽप्यवस्थावतोऽवस्थां पदार्थान्तरभूतां नानुमन्यते तस्यापि कथमवस्थाभेदादवस्थावतो भेदो न स्यादवस्थानां वा कथमभेदो न भवेत् तदर्थान्तरत्वाभावात् । स्याद्वाकूतं अवस्थानामवस्थावतः पदार्थान्तरत्वाभावेऽपि न तदभेदः तासां तद्धर्मत्वात् न च धर्मो धर्मिणोऽनर्थान्तरमेव धर्मधर्मिव्यवहारभेदविरोधात् भेदे तु न धर्माणां भेदाद्धर्मिणो भेदः प्रत्येतुं शक्येत यतोऽवस्थाभेदादीश्वरस्य भेदः सपद्यत इति । तदपि स्वमनोरथमात्रं धर्माणां सर्वथा धर्मिणोऽभेदे धर्मधर्मिभावविरोधात् सह्यविन्ध्यादिवत् । ननु धर्मधर्मिणोः सर्वथाभेदेऽपि निर्बाधप्रत्ययविषयत्वात् न धर्मधर्मिभावविरोधः । सह्यविन्ध्यादीनां तु निर्बाधधर्मधर्मिप्रत्ययविषयत्वाभावान्न धर्मधर्मिभावव्यवस्था । न हि वयं भेदमेव धर्मधर्मिव्यवस्थानिबंधनमभिदध्महे येन भेदे धर्मधर्मिभावो विरुध्यते सर्वथैवाभेद इव प्रत्ययविशेषात्तद्व्यवस्थाभिधानात् । सर्वथाभिन्नप्रत्ययोपायत्वाद्वैशेषिकाणां तद्विरोधाद्वेव विरोधसिद्धेरिति कश्चित् । सोऽपि स्वदर्शनानुरागान्धीकृत एव बाधकमवलोकयन्नपि नावधारयति । धर्मधर्मिप्रत्ययविशेषस्यैव धर्मधर्मिणोर्भेदैकान्तेऽनुपपत्तेः सह्यविन्ध्यादिवत्प्रतिपादनात् । यदि पुनः प्रत्यासत्तिविशेषादीश्वरतदवस्थयोर्भेदेऽपि धर्मधर्मिसंप्रत्ययविशेषः स्यात् न तु सह्यविन्ध्यादीनां तदभावादिति मतं तदाऽसौ प्रत्यासत्तिर्धर्मधर्मिभ्यां भिन्ना

कथं च धर्मधर्मिणोरिति व्यपदिश्यते। न पुनः सह्यविंध्ययोरिति विशेषहेतुर्वक्तव्यः प्रत्यासत्त्यंतरं तद्धेतुरिति चेत् तदपि यदि प्रत्यासत्तिर्तद्वद्भ्यो भिन्नं तदा तद्व्यपदेशनियमनिबंधनं प्रत्यासत्त्यंतरमभिधानीयं तथा चानवस्थानात्कुतः प्रकृतप्रत्यासत्तिनियमव्यवस्था। प्रत्ययविशेषादेवेति चेत्। ननु स एव विचार्योऽवर्तते प्रत्ययविशेषः किं प्रत्यासत्तेस्तत्तद्वद्भ्यां सर्वथा भेदे सतीश्वरतदवस्थयोः प्रत्यासत्तिरिति प्रादुर्भवति किं वाऽनर्थांतरभाव एव कथंचित्तादात्म्ये वा। तत्र सर्वथा भेदाभेदयोर्बाधकसद्भावात् कथंचित्तादात्म्यमनुभवतोरेव तथा प्रत्ययेन भवितव्यं तत्र बाधकानुदयात्। ननु चैकानेकयोः कथंचित्तादात्म्यमेव धर्मधर्मिणोः प्रत्यासत्तिः स्याद्वादिभिरभिधीयते तच्च यदि ताभ्यां भिन्नं तदा न तयोर्व्यपदिश्यते तदभिन्नं चेत् किं केन व्यपदेश्यं। यदि पुनस्ताभ्यां कथंचित्तादात्म्यस्यापि परं कथंचित्तादात्म्यमिष्यते तदा प्रकृतपर्यनुयोगस्यानिवृत्तेः परापरकथंचित्तादात्म्यपरिकल्पनायामनवस्था स्यात्। सैव कथंचित्तादात्म्यपक्षस्य बाधिकेति कथमयं पक्षः क्षेमकरः प्रेक्षावतामक्षूणमालक्ष्यते। यदि पुनः कथंचित्तादात्म्यं धर्मधर्मिणोर्भिन्नमेवाभ्यनुज्ञायते ताभ्यामनवस्थापरिजिहीर्षयाऽनेकांतवादिना तदा धर्मधर्मिणोरेव भेदोऽनुज्ञायतां सुदूरमपि गत्वा तस्याश्रयणीयत्वात्। तदनाश्रयणे भेदव्यवहारविरोधादित्यपरः सोऽप्यनवबोधाकुलितांतःकरण एव। कथंचित्तादात्म्यं हि धर्मधर्मिणोः संबंधः स चाविष्वग्भाव एव तयोर्जात्यंतरत्वेन संप्रत्ययाद्व्यवस्थाप्यते। धर्मधर्मिणोरविष्वग्भाव इति व्यवहारस्तु न संबंधांतरनिबंधनो यतः कथंचित्तादात्म्यांतरं संबंधांतरमनवस्थाकारि परिकल्प्यते तत एव कथंचित्तादात्म्याद्धर्मधर्मिणोः कथंचित्तादात्म्यमिति प्रत्ययविशेषस्य करणात्। कथंचित्तादात्म्यस्य कथंचिद्भेदस्वीकारत्वात् कथंचिद्भेदाभेदौ हि कथंचित्तादात्म्यं। तत्र कथंचिद्भेदाश्रयणाद् धर्मधर्मिणोः कथंचित्तादात्म्यमिति भेदविभक्तिसद्भावात् भेदव्यवहारसिद्धिः। कथंचिदभेदाश्रयणात्तु धर्मधर्मिणावेव कथंचित्तादात्म्यमित्यभेदव्यवहारः प्रवर्तते धर्मधर्मिव्यतिरेकेण कथंचिद्भेदाभेदयोरभावात् कथंचिद्भेदो हि धर्म एव कथंचिदभेदस्तु धर्म्येव कथंचिद्भेदाभेदौ तु धर्मधर्मिणावेव एवं सिद्धौ तावेव च कथंचित्तादात्म्यं वस्तुनोऽभिधीयते। तच्छब्देन वस्तुनः परामर्शात्। तस्य वस्तुनः आत्मानौ तदात्मानौ तयोर्भावस्तादात्म्यं। भेदाभेदस्वभावत्वं कथंचिदिति विशेषणेन सर्वथा भेदाभेदयोः परस्परनिरपेक्षयोः प्रतिक्षेपात्तत्पक्षे निक्षिप्तदोषपरिहारः। परस्परसापेक्षयोश्च परिग्रहात् जात्यंतरवस्तुव्यवस्थापनात् सर्वथा शून्यवादप्रतिक्षेपसिद्धिरिति कथंचिद्भेदाभेदात्मकं कथंचिद्धर्मधर्म्यात्मकं कथंचिद्द्रव्यपर्यायात्मकमिति प्रतिपाद्यते स्याद्वादन्यायनिष्ठैस्तथैव तस्य प्रतिष्ठितत्वात्। सामान्यविशेषवन्मेचकज्ञानवच्च। तत्र विरोधवैयधिकरण्यादिदूषणमनेनैवापसारितमिति किं नश्चिंतया। नन्वेवं स्याद्वादिनामपि द्रव्यस्य नित्यत्वात्तदन्वयव्यतिरेकानुविधानं कार्याणां न स्यादीश्वरान्वयव्यतिरेकानुविधानवत् पर्यायाणां च क्षणिकत्वात्तदन्वयव्यतिरेकानुविधानमपि न घटते नष्टे पूर्वपर्याये स्वयमसत्येवोत्तरकार्यस्योत्पत्तेः सति चानुत्पत्तेरन्यथैकक्षणवृत्तित्वप्रसंगात्। सर्वपर्यायाणामिति तद्भावभावित्वानुपपत्तिः। यदि पुनर्द्रव्ये सत्येव कार्याणां प्रसूतेस्तदन्वयसिद्धिस्तन्निमित्तपर्यायाणामभावे वानुत्पत्तेर्व्यतिरेकसिद्धिरिति तदन्वयव्यतिरेकानुविधानमिष्यते तदश्वरस्य तदिच्छाविज्ञानयोश्च नित्यत्वेऽपि तन्वादिकार्याणां तद्भाव एव भावात्तदन्वयस्तत्सहकारिकारणावस्थापाये च तेषामनुत्पत्तेर्व्यतिरेक इति तदन्वयव्यतिरेकानुविधानमिष्यतां विशेषाभावात् ततः सर्वकार्याणां बुद्धिमत्कारणत्वसिद्धिरिति परे प्रत्यवतिष्ठंते तेऽपि न कार्यकारणभावविदः। स्याद्वादिनां द्रव्यस्य पर्यायनिरपेक्षस्य पर्यायस्य वा द्रव्यनिरपेक्षस्य द्रव्यपर्याययोर्वा परस्परनिरपेक्षयोः कार्यकारित्वानभ्युपगमात् तथा प्रतीत्यभावात् द्रव्यपर्यायात्मकस्यैव जात्यंतरवस्तुनः कार्यकारित्वेन संप्रत्ययात् कार्यकारणभावस्य तथैव प्रसिद्धेः वस्तुनि द्रव्यरूपेणान्वयप्रत्ययविषये सत्येव कार्यस्य प्रादुर्भावात्तन्निबंधनपर्यायविशेषाभावे च कार्यस्याप्रादुर्भावात्तदन्वयव्यतिरेकानुकरणात्कार्यकारणभावो व्यवतिष्ठते। न च द्रव्यरूपेणापि वस्तुनो नित्यत्वमवधार्यते तस्य

१ प्रत्यासत्तिधर्मधर्मिभ्यः। २ धर्मधर्मिप्रत्यासत्तीनामिदं प्रत्यासत्त्यंतमिति व्यपदेशनियमस्य कारणं।

पर्यायेभ्यो भंगुरेभ्य: कथंचिदनर्थान्तरभावात् कथंचिदनित्यत्वसिद्धेर्महेश्वरस्य तु वैशेषिकैः सर्वथा नित्यत्वमभिधानात्तदन्वयव्यतिरेकानुकरणासंभवात्कार्याणामुत्पत्तेरयोगात् । पर्यायाणां च द्रव्यरूपेण नित्यत्वसिद्धेः कथंचिन्नित्यत्वात्सर्वथा नित्यत्वानवधारणात् विशिष्टपर्यायसद्भावे कार्यस्योदयात्तदभावेऽनुदयात् कार्यस्य तदन्वयव्यतिरेकानुकरणमिद्ध: । निरन्वयक्षणिकपर्यायाणामेव तद्घटनात् तत्र कार्यकारणभावाव्यवस्थितेः । पर्यायार्थिकनयप्राधान्याद्विरोधात् द्रव्यार्थिकनयप्राधान्येन तदविरोधात् । प्रमाणार्पणया तु द्रव्यपर्यायात्मनि वस्तुनि सति कार्यस्य प्रसवनात्तदसत्त्वे चाऽप्रसवनात्तदन्वयव्यतिरेकानुविधानं सकलजनसाक्षिकं कार्यकारणभावं व्यवस्थापयेत् सर्वथैकांतकल्पनायां तदभावविभावयतीति कृतमतिप्रसंगिन्या कथया । महेश्वरज्ञानस्य नित्यस्याव्यापिनोऽपि सर्वत्र कार्यकरणसमर्थस्य सर्वेषु देशेषु सर्वस्मिन्काले व्यतिरेकाभासिद्धेरन्वयस्यापि नियतस्य निश्चेतुमशक्तेस्तन्वादिकार्यं तद्धेतुकं कारणान्तरापेक्षयापि न सिध्यत्येवेति स्थितं । कस्यचिन्नित्यव्यापीश्वरज्ञानाभ्युपगमेऽपि दूषणमतिदिशन्नाह,—

## एतेनैवेश्वरज्ञानं व्यापिनित्यमपाकृतं ।
## तस्येशवत्सदा कार्यक्रमहेतुत्वहानितः ॥ ३५ ॥

एतेन व्यतिरेकाभावान्वयसंदेहाभ्यामव्यापककथनेन व्यापिनित्यमीश्वरज्ञानं तन्वादिकार्योत्पत्तिनिमित्तमपाकृतं वेदितव्यं तस्येश्वरवत्सर्वगतत्वेन क्वचिद्देशे नित्यत्वेन कदाचित्काले व्यतिरेकाभावनिश्चयात् तदन्वयमात्रस्य चारमांतरशंकितुमशक्तेः तस्मिन्सति समर्थे युगपत्सर्वकार्याणामुत्पत्तिप्रसंगात् । सर्वदा कार्यक्रमहेतुत्वहानेः कालदेशकृतक्रमाभावात् 'सर्वथा स्वयं क्रमाभावात्' क्रमवत्त्वे नित्यत्वसर्वगतत्वविरोधात् पावकादिवत् । स्यान्मतं प्रतिनियतदेशकालसहकारिकारणक्रममापेक्ष्य कार्यक्रमहेतुत्वं महेश्वरस्य च तद्विज्ञानस्यापि न विरुध्यते इति । तदप्यशक्यप्रतिष्ठं सहकारिकारणेषु क्रमवत्सु सत्सु तन्वादिकार्याणां प्रादुर्भवतां तव्यसत्सु चानुत्पद्यमानानां तदन्वयव्यतिरेकानुविधानात् तद्धेतुकत्वस्यैव प्रसिद्धेर्महेश्वरज्ञानहेतुकत्वं दुरुपपादमापनीपद्यते । यदि पुन: सकलसहकारिकारणानामनित्यानां क्रमजन्मनामपि चेतनत्वाभावाच्चेतनेनाधिष्ठितानां कार्यनिष्पादनाय प्रवृत्तेरनुपपत्तेस्तुरीतंतुवेमशलाकादीनां कुविंदेनानधिष्ठितानां पटास्पादनायाऽप्रवृत्तिवच्चेतनस्तदधिष्ठाता साध्यते । तथा हि विवादाध्यासितानि कारणान्तराणि क्रमवर्तीन्यक्रमाणि च चेतनाधिष्ठितान्येव तन्वादिकार्याणि कुर्वंति स्वयमचेतनत्वात् यानि यानि अचेतनानि तानि तानि चेतनाधिष्ठितान्येव स्वकार्यं कुर्वाणानि दृष्टानि यथा तुरीतंत्वादीनि पटकार्यं, स्वयमचेतनानि च कारणांतराणि तस्माच्चेतनाधिष्ठितान्येव तन्वादिकार्याणि कुर्वंते योऽसौ तेषामधिष्ठाता स महेश्वर: पुरुषविशेष: क्लेशकर्मविपाकाशयैरपरामृष्ट: समस्तकारकशक्तिपरिज्ञानभाक् सिसृक्षाप्रयत्नविशेषवांश्च प्रभुरभिधीयते तद्विपरीतस्य समस्तकारकाधिष्ठातृत्वविरोधात् बहूनामपि समस्तकारकाधिष्ठायिनां पुरुषविशेषाणां प्रतिनियतज्ञानादिशक्तीनामेकेन महात्मनाऽधिष्ठितानामेव प्रवृत्तिघटनात् सामंतमहासामंतमंडलीकादीनामेकचक्रवर्त्यधिष्ठितानां प्रवृत्तिवदिति महेश्वरसिद्धि: । तत्राचेतनस्याविति हेतोर्वत्सविवृद्धिनिमित्तं प्रवर्तमानेन गोक्षीरेणानैकांतिकत्वमिति न शंकनीयं । तस्यापि चेतनेन वत्सनादृष्टविशेषसहकारिणाधिष्ठितस्यैव प्रवृत्त: । अन्यथा मृते वत्से गोमक्षेनैव तस्य प्रवृत्तिविरोधात् । न च वत्सादृष्टविशेषमञ्जात्प्रवृत्तावपि समानोऽयं दोष इति शक्यः तदीयोपभोक्तृजनादृष्टविशेषसहकारिणापि चेतनेनाधिष्ठितस्य प्रवृत्तिघटनात् सहकारिणामप्रतिनियमात् । यदपि कश्चिदुच्यते महेश्वरोऽपि चेतनांतराधिष्ठित: प्रवर्तते चेतनत्वाद्विशिष्टकर्मकरादिवदिति । तदपि न सत्यं तदधिष्ठापकस्यैव महेश्वरत्वात् । यो ह्यंत्योऽधिष्ठाता सर्वत्र स महेश्वरस्ततोऽन्यस्य महेश्वरत्वानुपपत्तेन चान्योऽधिष्ठाता न व्यवतिष्ठते तन्वादिकार्याणामुत्पत्तिमन्यवस्थानामभावप्रसंगात् । परापरमहेश्वरप्रतीक्षायामेवोपक्षीणशक्तित्वात् ततो निरवद्यमिद

साधनमिति केचित् । तेऽपि न हेतुसामर्थ्यवेदिनः । अचेतनत्वस्य हेतोः संसारिजनज्ञानेषु स्वयं चेतन स्वभावात्पक्षाव्यापकत्वात् । ननु च न चेतनत्वप्रतिषेधोऽचेतनत्वं किं तर्हि चेतनासमवायप्रतिषेधः स च ज्ञानेष्वस्ति तेषां स्वयं चेतनत्वात् तत्रापरचेतनासमवायाभावात् ततोऽचेतनत्वं साधनं न पक्षाव्यापकं ज्ञानेष्वपि सद्भावादिति न मंतव्यं । संसार्यात्मसु चेतनासमवायात् चेतनत्वप्रसिद्धेरचेतनत्वस्य हेतोरभावात् पक्षाव्यापकत्वस्य तदवस्थत्वात् । यदि तु संसार्यात्मनां स्वतोऽचेतनत्वादचेतनत्वस्य हेतोस्तत्रसद्भावान्नपक्षाव्यापकत्वमिति मतिः । तदा महेश्वरस्याप्यचेतनत्वप्रसंगाः । तस्यापि स्वतोऽचेतनत्वात् तथा च दृष्टादृष्ट कारणांतरवदीश्वरस्यापि हेतुकर्तुश्चेतनांतराधिष्ठितत्वं साधनीयं तथा चानवस्था सुदूरमपि गत्वा कस्यचित्स्वतश्चेतनत्वानभ्युपगमात् । महेश्वरस्य स्वतोऽचेतनस्यापि चेतनांतराधिष्ठितत्वाभावे तेनैव हेतोरनेकांतिकत्वमिति कुतः सकलकारकाणां चेतनाधिष्ठितत्वसिद्धिः यत इदं शोभते "अज्ञो जंतुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितोगच्छेत्स्वर्गं वा श्वभ्रमेव चेति" । स्यादाकूतं चेतनाज्ञानं तदधिष्ठितत्वं सकलकारकांतराणामचेतनत्वेन हेतुना साध्यते तच ज्ञानं समस्तकारकशक्तिपरिच्छेदकं नित्यं गुणत्वादाश्रयमंतरेणासंभवात् स्वाश्रयमात्मांतरं साधयति स नो महेश्वर इति । तदप्ययुक्तं । संसार्यात्मनां ज्ञानैरपि स्वयं चेतनास्वभावैरधिष्ठितस्य शुभाशुभकर्मकलापस्य तत्सहकारिकदंबकस्य च तन्वादिकार्योत्पत्तौ व्यापारसिद्धेरीश्वरज्ञानाधिष्ठानपरिकल्पनावैयर्थ्यप्रसंगात् । तदन्वयव्यतिरेकाभ्यामेव तद्व्यवस्थापनात् । अथ मतमेतत् संसार्यात्मनां विज्ञानानि विप्रकृष्टार्थाविषयत्वान्न धर्माधर्मपरमाणुकालाद्यतींद्रियकारकविशेषसाक्षात्करणसमर्थानि । न च तदसाक्षात्करणे ततः प्रयोजकत्वं तेषामवतिष्ठते तदप्रयोजकत्वे च न तदधिष्ठितानामेव धर्मादीनां तन्वादिकार्यजन्मनिप्रवृत्तिः सिध्येत् ततोऽतींद्रियार्थसाक्षात्कारिणा ज्ञानेनाधिष्ठितानामेव स्वकार्ये व्यापारेण भवितव्यं तच महेश्वरज्ञानमिति । तदप्यनालोचितयुक्तिकं सकलातींद्रियार्थसाक्षात्कारिण एव ज्ञानस्य कारकाधिष्ठायकत्वेन प्रसिद्धस्य दृष्टांततयोपादीयमानस्यासंभवात्तदधिष्ठितत्वसाधने हेतोरन्वयत्वप्रसक्तेः । न हि कुंभकारादेः कुंभाद्युत्पत्तौ तत्कारकसाक्षात्कारि ज्ञानं विद्यते दंडचक्रादिदृष्टकारकसंदोहस्य तेन साक्षात्करणेऽपि तन्निमित्तादृष्टविशेषकालादेरसाक्षात्करणात् । ननु लिंगविशेषात्तत्परिच्छित्तिनिमित्तस्य लैंगिकस्य ज्ञानस्य सद्भावात् तथा स्वादृष्टविशेषाः कुंभकारादयः कुंभादिकार्याणि कुर्वंति नेतरे तेषां तथाविधादृष्टविशेषाभावादित्यागमज्ञानस्यापि तत्परिच्छेदनिबंधनस्य सद्भावात् सिद्धमेव कुंभकारादिज्ञानस्य कुंभादिकारकपरिच्छेदकत्वं तत्प्रयोक्तृत्वेन तदधिष्ठाननिबंधनत्वं ततस्तस्य दृष्टांततयोपादानान्नहेतोरन्वयत्वापत्तिरिति चेत् तर्हि सर्वसंसारिणां यथास्वं तन्वादिकार्यजन्मनि प्रत्यक्षतोऽनुमानादागमाच तन्निमित्तदृष्टादृष्टकारकविषयपरिज्ञानसिद्धेः कथमज्ञत्वं येनात्मनः सुखदुःखोत्पत्तौ हेतुत्वं न भवेत् यतश्च सर्वसंसारीश्वरप्रेरित एव स्वर्गं वा श्वभ्रं वा गच्छेदिति समंजसमालक्ष्यते । ततः किमीश्वरपरिकल्पनया दृष्टादृष्टकारकांतराणामेव क्रमाक्रमजन्मनामन्वयव्यतिरेकानुविधानात् क्रमाक्रमजन्मानि तन्वादिकार्याणि भवंतु तदुपभोक्तृजनस्यैव ज्ञानवतः तदधिष्ठायकस्य प्रमाणोपपन्नस्य व्यवस्थापनात् । सांप्रतमभ्युपगम्यापि महेश्वरज्ञानं अस्वसंविदितं स्वसंविदितं वेति कल्पनाद्वितयसंभवे प्रथमकल्पनायां दूषणमाह—

अस्वसंविदितं ज्ञानमीश्वरस्य यदीष्यते ।
तदा सर्वज्ञता न स्यात् स्वज्ञानस्याप्रवेदनात् ॥ ३६ ॥
ज्ञानांतरेण तद्वित्तौ तस्याप्यन्येन वेदनं ।
वेदनेन भवेदेवमनवस्था महीयसी ॥ ३७ ॥
गत्वा सुदूरमप्येवं स्वसंविदितवेदने ।
इष्यमाणे महेशस्य प्रथमं तादृगस्तु वः ॥ ३८ ॥

महेश्वरस्य हि विज्ञानं यदि स्वं न वेदयते स्वात्मनि क्रियाविरोधात्तदा समस्तकारकशक्तिनिकरमपि कथं संवेदयेत् । तथा हि । नेश्वरज्ञानं सकलकारकशक्तिनिकरसंवेदकं स्वासंवेदकत्वात् । यदस्वासंवेदकं तन्न सकलकारकशक्तिनिकरसंवेदकं यथा चक्षुः, तथा चेश्वरज्ञानं तस्मान्न तथेति कुतः समस्तकारकाधिष्ठायकं यतस्तदाश्रयस्येश्वरस्य निखिलकार्योत्पत्तौ निमित्तकारणत्वं सिध्येत् सर्वज्ञताया एव तस्यैव प्रसिद्धेः । अथवा यदीश्वरस्य ज्ञानं स्वयमीश्वरेण न संवेद्यत इत्यस्वसंविदितमिष्यते तदा तस्य सर्वज्ञता न स्यात् स्वज्ञानासंवेदनाभावात् । ननु च सर्वं ज्ञेयमेव जानन् सर्वज्ञः कथ्यते न पुनर्ज्ञानं तस्याज्ञेयत्वात् । मैवं तदज्ञाने ज्ञेयपरिच्छित्तिर्न भवेत् चक्षुरपरिज्ञाने तत्परिच्छेद्यरूपापरिज्ञानप्रसंगात् । करणापरिज्ञानेऽपि विषयपरिच्छित्तेरविरोधादित्यपि नानुमन्तव्यं । सर्वग्रहणेन ज्ञानज्ञेयज्ञातृज्ञप्तिलक्षणस्य तत्त्वचतुष्टयस्य प्रतिज्ञानात् 'प्रमाणं प्रमाता प्रमेयं प्रमितिरिति चतसृषु चैवं विधासु तत्त्वं परिसमाप्यते' इति वचनात् । तदन्यतमापरिज्ञानेऽपि सकलतत्त्वपरिज्ञानानुपपत्तेः कुतः सर्वज्ञतेश्वरस्य सिध्येत् । ज्ञानांतरेण स्वज्ञानस्यापि वेदनाभावादसर्वज्ञतेति चेन् तर्हि तदपि ज्ञानांतरं परेण ज्ञानेन ज्ञातव्यमित्यभ्युपगम्यमानेऽनवस्था महीयसी स्यात् । सुदूरमप्यनुसृत्य कस्यचिद्विज्ञानस्य स्वार्थावभासनसमावत्ते प्रथममेव सहस्रकिरणवत् स्वार्थावभासनसमर्थत्वमुररीक्रियतामलमस्वसंविदितज्ञानकल्पनया, स्वार्थव्यवसायात्मकज्ञानाभ्युपगमे च युष्माकं तस्य महेश्वराद्भेदे पर्यनुयोगमाह—

तत्स्वार्थव्यवसायात्मज्ञानं भिन्नं महेश्वरात् ।
कथं तस्येति निर्देश्यमाकाशादिवदंजसा ॥ ३९ ॥
समवायेन तस्यापि तद्भिन्नस्य कुतो गतिः ।
इहेदमिति विज्ञानादबाध्याद्व्यभिचारि तत् ॥ ४० ॥
इह कुंडे दधीत्यादि विज्ञानेनास्तविद्विषा ।
साध्ये सबंधमात्रे तु परेषां सिद्धसाधनं ॥ ४१ ॥

यदि स्वार्थव्यवसायात्मकं ज्ञानमीश्वरस्याभ्युपगम्यते तस्यास्मदादिविलक्षणत्वात् तदा तदीश्वराद्भिन्नमभ्युपगन्तव्यं । अभेदे सिद्धांतविरोधात् । तथा चाकाशादेरिव कथं तस्येति व्यपदेश्यमिति पर्यनुयुञ्ज्महे । स्यान्मतं भिन्नमपि विज्ञानं महेश्वरात्तस्येति व्यपदिश्यते तत्र समवायात् नाकाशादेरिति निर्दिश्यते तत्र तस्यासमवायादिति । तदप्ययुक्तं । ताभ्यामीश्वरज्ञानाभ्यां भिन्नस्य समवायस्यापि कुतः प्रतिपत्तिरिति पर्यनुयोगस्य तदवस्थत्वात् । इहेदमिति प्रत्ययविशेषाद्बाधकरहितात् समवायस्य प्रतिपत्तिः तथाहि, इहेश्वरे ज्ञानमित्यादीहेदंप्रत्ययो विशिष्टपदार्थहेतुकः सकलबाधकरहितत्वे सतीहेदमिति प्रत्ययविशेषत्वात् यो यः सकलबाधकरहितत्वे सति प्रत्ययविशेषः स स विशिष्टपदार्थहेतुको दृष्टः यथा द्रव्येषु द्रव्यमित्यन्वयप्रत्ययविशेषः सामान्यपदार्थहेतुकः सकलपदार्थबाधकरहितत्वे सति प्रत्ययविशेषश्चेहेदमिति प्रत्ययविशेषः तस्माद्विशिष्टपदार्थहेतुक इत्यनुमीयते । योऽसौ विशिष्टः पदार्थस्तद्धेतुः स समवायः, पदार्थांतरस्य तद्धेतोरसमवायहेतुकत्वायोगाच्च, न हीह तंतुषु पट इति प्रत्ययस्तंतुहेतुकः, तंतुषु तंतव इति प्रत्ययस्योत्पत्तेः नापि पटहेतुकः पटात्पट इति प्रत्ययस्योदयात् । नापि वासनाविशेषहेतुकः तस्याः कारणरहितायाः संभवाभावात् । पूर्वं तथाविधज्ञानस्य तत्कारणत्वे तदपि कुतो हेतोरिति चिन्त्यमेतत् पूर्ववासनात इति चेन्न । अनवस्थाप्रसंगात् । ज्ञानवासनयोरनादिसंतानपरिकल्पनायां कुतो बहिरर्थसिद्धिरनादिवासनावशादेव नीलादिप्रत्ययानामपि भावात् । तथैव विज्ञानसंतानानानात्वसिद्धिः संतानांतरग्राहिणो विज्ञानस्यापि संतानांतरमन्तरेण वासनाविशेषादेव तथाप्रत्ययप्रसूतेः स्वप्नसंतानांतरप्रत्ययवत् । नानासंतानानभ्युपगमे चैकज्ञानसंतानसिद्धिरपि कुतः स्यात् । स्वसंवेदनामात्रेऽपि

सद्ग्राहिणः प्रत्ययस्य भावात् स्वसंतानस्याप्यनिष्टौ संविदद्वैतं कुतः साधयेत् स्वतःप्रतिभासनादिति चेन्न। तथा वासनाविशेषादेव स्वतःप्रतिभासस्यापि भावात्। शक्यं हि वक्तुं स्वतःप्रतिभासवासनावशादेव स्वतःप्रतिभासः संवेदनस्य न पुनः परमार्थत इति न किंचित्पारमार्थिकं संवेदनं सिध्येत्। तथाच स्वरूपस्य स्वतोगतिरिति रिक्ता वाचोयुक्तिः। तदनेन कुतश्चित्किंचित्परमार्थतः साधयता दूषयता वा साधनज्ञानं दूषणज्ञानं वाऽभ्रांतं सालंबनमभ्युपगंतव्यं। तद्वत्सर्वमबाधितं ज्ञानं सालंबनमिति कथमिहेदमिति प्रत्ययस्याबाधितस्य निरालंबनता येन वासनामात्रहेतुरयं स्यात्। नापि निर्हेतुकः कदाचित्कत्वात्। ततोऽस्य विशिष्टः पदार्थो हेतुरभ्युपगंतव्य इति वैशेषिकाः तेऽप्येवं प्रष्टव्याः। कोऽसौ विशिष्टः पदार्थः समवायः संबंधमात्रं वा। न तावत्समवायः, तद्धेतुकत्वे साध्येऽस्येहेदमिति प्रत्ययस्येह कुंडे दधीत्यादिना निरस्तसमस्तबाधकेन प्रत्ययेन व्यभिचारित्वात्, तदपीहेदमिति विज्ञानमबाधं भवत्येव। नच समवायहेतुकं तस्य संयोगहेतुकत्वात्। संबंधमात्रे तु तन्निबंधने साध्ये परेषां सिद्धसाधनमेव, स्याद्वादिनां सर्वत्रेहेदं प्रत्ययस्याबाधितस्य संबंधमात्रनिबंधनत्वेन सिद्धत्वात्। स्यान्मतं। वैशेषिकाणामबाधितेहेदं प्रत्ययाल्लिंगात्सामान्यतः संबंधे सिद्धे विशेषणावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोः सामान्यतद्वतोर्विशेषतद्वतोश्च यः संबंध इहेदं प्रत्ययलिंगः स समवाय एव भविष्यति लक्षणविशेषसंभवात्। तथा हि "अयुतसिद्धानामाधार्याधारभूतानामिहेदं प्रत्ययलिंगो यः संबंधः स समवाय इति प्रशस्तकरः"। तत्र इहेदं प्रत्ययलिंगः समवाय इत्युच्यमानेऽतरालाभावनिबंधनेन इह ग्रामे वृक्ष इति इहेदं प्रत्ययेन, व्यभिचारात् संबंध इति वचनं। संबंधो हि इहेदं प्रत्ययलिंगो यः स एव समवाय इष्यते नचांतरालाभावो ग्रामवृक्षाणां संबंधइति न तेन व्यभिचारः। तथापि इहाकाशे शकुनिरिति इहेदं प्रत्ययेन संयोगसंबंधमात्रनिबंधनेन व्यभिचार इत्याधाराधेयभूतानामिति निगद्यते। न हि यथाऽवयवावयव्यादीनामाधाराधेयभूतत्वमुभयोः प्रसिद्धं तथा शकुन्याकाशयोरौत्तराधर्यायोगात् आकाशस्य सर्वगतत्वेन शकुनेरुपर्यपि भावादधस्तादिवेति न तत्रेहेदंप्रत्ययेन व्यभिचारः। नन्वाकाशस्यातींद्रियत्वात्तदस्मदादीनामिहेदं प्रत्ययस्यासंभवात् कथं तेन व्यभिचारचोदना साधीयसीति न मंतव्यं। कुतश्चिल्लिंगादनुमितेऽप्याकाशे श्रुतिप्रसिद्धेर्वा कस्यचिदिहेदमिति प्रत्ययाविरोधात् तत्र, भ्रांतेन वा केषांचिदिहेदमिति प्रत्ययेन व्यभिचारचोदनायाः न्यायप्राप्तत्वात् तत्परिहारार्थमाधाराधेयभूतानामिति वचनस्योपपत्तेः। नन्वेवमपीह कुंडे दधीति प्रत्ययेनानेकांतस्तस्य संयोगनिबंधनत्वेन समवायाहेतुत्वादिति न शंकनीयमयुतसिद्धानामिति प्रतिपादनात्। नहि यथावयवावयव्यादयोऽयुतसिद्धास्तथा दधिकुंडादयः तेषां युतसिद्धत्वात्। तह्ययुतसिद्धानामेवेति वक्तव्यमाधाराधेयभूतानामिति वचनस्याभावेऽपि व्यभिचाराभावादिति न चेतसि विधेयं। वाच्यवाचकभावेनाकाशाकाशशब्दयोर्व्यभिचारात्॥ इहाकाशे वाच्ये वाचक आकाशशब्द इति इहेदंप्रत्ययालिंगस्यायुतसिद्धसंबंधस्य वाच्यवाचकभावप्रसिद्धेः तेन व्यभिचारोपपत्तेराधाराधेयभूतानामिति वचनस्योपपत्तेः। नन्वाधाराधेयभूतानामयुतसिद्धानामपि संबंधस्य विषयविषयिभावस्य सिद्धेः कुतः समवायसिद्धिः। नह्यात्मनि–इच्छादीनां ज्ञानमयुतसिद्धं न वभाति। तथाहमितिज्ञानमाधाराधेयभावस्याप्यत्र भावात् नचाहमिति प्रत्ययस्यात्मविषयस्यायुतसिद्धस्यात्माधारस्य विषयविषयिभावोऽसिद्ध इति कुतस्तयोः समवाय एव सिध्येदिति न वक्तव्यं। आधाराधेयभूतानामेवायुतसिद्धानामेवेति चावधारणात्। वाच्यवाचकभावो हि युतसिद्धानामनाधाराधेयभूतानां च प्रतीयते विषयविषयिभाववत्। ततोऽनेनानवधारितविषयेण न व्यभिचारः संभाव्यते। नन्वेवमयुतसिद्धानामेवेत्यवधारणाद्व्यभिचाराभावादाधाराधेयभूतानामिति वचनमनर्थकं स्यात् आधाराधेयभूतानामेवेत्यवधारणे सत्ययुतसिद्धानामिति वचनवत्॥ विषयविषयिभावस्य वाच्यवाचकभावस्य च युतसिद्धानामप्यनाधार्याधारभूतानामिव संभवात् तेन व्यभिचाराभावादिति च

१ अयुतसिद्धभिन्नानामित्यर्थः।

न मननीयं । पटाद्येकद्रव्यसमवायिनां रूपरसादीनामयुतसिद्धानामेव परस्परं समवायाभावात्कार्यसमवायेन सम्बन्धेन व्यभिचारात् । नाप्ययुतसिद्धानामपि संभवति विषयविषयिभावव्याप्यव्यापकभाववद्वा ततोऽयुतसिद्धानामित्यवधारणेऽपि व्यभिचारनिवृत्त्यर्थमाधार्याधारभूतानामिति वचनं । तथाऽऽधार्याधारभूतानामेवेति वचनेऽप्याधाराधेयभावेन संयोगविशेषेण सर्वथाऽनाधार्याधारभूतानामसम्बद्धाभ्यामभिचारः संभाव्यत एव तन्निवृत्त्यर्थमयुतसिद्धानामेवेति वचनमर्थवदेवेति निरवद्यमयुतसिद्धत्वाधार्याधारभूतत्वलक्षणं संयोगादिभ्योऽव्यवच्छेदकं सम्बन्धस्येहेदं प्रत्ययलिङ्गेन व्यवस्थापितस्य समवायस्याभावत्वं साधयत्येव । अतः संबंधमात्रेऽपि साध्ये न सिद्धसाधनमिति वैशेषिका संचक्षते तेषामयुतसिद्धानामिति वचनं तावद्विचार्यते । किमिदमयुतसिद्धत्वं नामविशेषणं, वैशेषिकशास्त्रापेक्षया लोकापेक्षया वा स्यात् ।। उभयथापि न साध्विति यदाह ।।

सत्यामयुतसिद्धौ चेन्नेदं साधुविशेषणं ।
शास्त्रीयायुतसिद्धत्वविरहात्समवायिनोः ॥४२॥
द्रव्यं स्वावयवाधारं गुणो द्रव्याश्रयो यतः ।
लौकिक्ययुतसिद्धिस्तु भवेद्दुग्धांभसोरपि ॥४३॥

इह तन्तुषु पट इत्यादिरिहेदं प्रत्ययः समवायसंबंधनिबंधन एव, निर्बाधत्वे सत्ययुतसिद्धेहेदंप्रत्ययत्वात् । यस्तु न समवायसंबंधनिबंधनः स नैवं यथेह समवायिषु समवाय इति बाध्यमानेहेदं प्रत्ययः । इह कुंडे दधीति युतसिद्धेहेदं प्रत्ययश्च । निर्बाधत्वे सत्ययुतसिद्धेहेदंप्रत्ययश्चायमिह तन्तुषु पट इत्यादिः, तस्मात्समवायसंबंधनिबंधन इति केवलव्यतिरेकी हेतुरसिद्धत्वादिदोषरहितत्वात् स्वसाध्याविनाभावी समवायसंबंधं साधयतीति परैरभिधीयते सत्यामयुतसिद्धाविति वचनसामर्थ्यात् । तत्रेदमयुतसिद्धत्वं यदि शास्त्रीयं हेतोर्विशेषणं तदा न साधु प्रतिभासते समवायिनोरवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोः सामान्यतद्वतोर्विशेषतद्वतोश्च शास्त्रीयस्यायुतसिद्धत्वस्य विरहात् वैशेषिकशास्त्रे हि प्रसिद्धम्-'अपृथगाश्रयवृत्तित्वमयुतसिद्धत्वं'। तच्चेह नास्त्येव यतः कारणद्रव्यं तंतुलक्षणं स्वावयवांशुषु वर्तते कार्यद्रव्यं च पटलक्षणं स्वावयवेषु तंतुषु वर्तत इति स्वावयवाधारमित्यनेनावयवावयविनोः पृथगाश्रयवृत्तित्वसिद्धेरपृथगाश्रयवृत्तित्वमसत्त्वेवेति प्रतिपादितं यतश्च गुणः कार्यद्रव्याश्रयो रूपादिः । कार्यद्रव्यं तु स्वावयवाधारं प्रतीयते तस्य गुणगुणिनोरपृथगाश्रयवृत्तित्वमसंभाव्यमानं निवेदितं । एतेन क्रियायाः कार्यद्रव्यवर्तिन्याः कार्यद्रव्यस्य च स्वावयवेषु, क्रियाक्रियावतोरपृथगाश्रयवृत्तित्वाभावः कथितः । तथा सामान्यस्य द्रव्यत्वादेर्द्रव्यादिषु वृत्तेर्द्रव्यादीनां च स्वाश्रयेषु, सामान्यतद्वतोः पृथगाश्रयवृत्तित्वं व्याख्यातं तथैवापरविशेषस्य कार्यद्रव्येषु प्रवृत्तेः कार्यद्रव्याणां च स्वावयवेषु विशेषतद्वतोरपृथगाश्रयवृत्तित्वं निरस्तं वेदितव्यं । ततो न शास्त्रीयायुतसिद्धिः समवायिनोरस्ति या तु लौकिकी लोकप्रसिद्धैकभाजनवृत्तिः सा दुग्धांभसोरपि युतसिद्धयोरस्तीति तथापि साऽयुतसिद्धत्वं मत्वा समवायिता साधीय इति प्रतिपत्तव्यं ।

पृथगाश्रयवृत्तित्वं युतसिद्धिर्न चानयोः ।
सास्तीशस्य विभुत्वेन परद्रव्याश्रितिच्युतेः ॥४४॥
ज्ञानस्यापीश्वरादन्यद्रव्यवृत्तित्वहानितः ।
इति येऽपि समादध्युस्तांश्च पर्यनुयुंज्महे ॥४५॥
विभुद्रव्यविशेषाणामन्याश्रयविवेकतः ।
युतसिद्धिः कथं तु स्यादेकद्रव्यगुणादिषु ॥४६॥

समवायः प्रसज्येतायुतसिद्धौ परस्परं ।
तेषां तद्द्वितयासत्वे स्याद्व्याघातो दुरुत्तरः ॥४७॥

ननु च पृथगाश्रयवृत्तित्वं युतसिद्धिः 'पृथगाश्रयाश्रयित्वं युतसिद्धिः' इति वचनात्। पृथगाश्रयसमवायोयुतासिद्धिरिति वदतां समवायस्य विवादाध्यासितत्वाल्लक्षणासिद्धिप्रसंगात् । लक्षणस्याकारकत्वेन ज्ञापकत्वेऽपि तेन सिद्धेन भवितव्यं । असिद्धस्य विवादाध्यासितस्य संदिग्धत्वात् तल्लक्षणत्वायोगात्। सिद्धं हि कस्यचिद्भेदकं लक्षणमुपपद्यते नान्यथेति लक्ष्यलक्षणभावविदो विभावयंति। तत्र युतसिद्धत्वमीश्वरज्ञानयोर्नास्त्येव महेश्वरस्य विभुत्वान्नित्यत्वाच्चान्यद्रव्यवृत्तित्वाभावान्महेश्वराद्न्यत्र तद्विज्ञानत्वस्याप्रवृत्तेः पृथगाश्रयवृतित्वाभावात्। कुंडस्य हि कुंडावयवेषु वृत्तिर्दध्नश्च दध्यवयवेष्विति कुंडावयवदध्यवयवाख्यौ पृथग्भुतावाश्रयौ तयोश्च कुंडस्य दध्नश्च वृत्तिरिति पृथगाश्रयवृतित्वं तयोरभिधीयते। न चैवंविधं पृथगाश्रयाश्रयित्वं समवायिनोः संभवति तंतूनां स्वावयवेष्वंशुषु यथा वृत्तिः न तथा पटस्य तंतुव्यतिरिक्ते क्वचिदाश्रये नह्यत्र चत्वारोऽर्थाः प्रतीयंते। द्वावाश्रयौ पृथग्भूतौ द्वौ चाश्रयिणाविति तंतोरेव स्वावयवापेक्षयाश्रयित्वात्पटापेक्षया चाश्रयत्वात्त्रयाणामेवार्थानां प्रसिद्धेः पृथगाश्रयाश्रयित्वस्य युतसिद्धिलक्षणस्याभावादयुतसिद्धत्वं शास्त्रीयं समवायिनोः सिद्धमेव ततोऽयुतसिद्धत्वविशेषणं साध्येवासिद्धत्वाभावात्। लौकिक्ययुतसिद्धत्वं तु प्रतीतिबाधितं नाभ्युपगम्यत एवं ततःसविशेषणाद्धेतोः समवायसिद्धिरिति येऽपि समादधते विदग्धवैशेषिकास्तांश्च पर्यनुयुंज्महे। विभुद्रव्यविशेषाणामात्माकाशादीनां कथं तु युतसिद्धिः परिकल्पते भवद्भिस्तेषामन्याश्रयविरहात्। पृथगाश्रयाश्रयित्वासंभवात्। नित्यानां च पृथग्गतिमत्वं युतसिद्धिरित्यपि न विभुद्रव्येषु संभवति तद्धि पृथग्गतिमत्वं द्विधाभिधीयते कैश्चित्। अन्यतरपृथग्गतिमत्वं उभयपृथग्गतिमत्वं चेति। तत्र परमाणविभुद्रव्ययोरन्यतरपृथग्गतिमत्वं परमाणोरेव गतिमत्वात् । विभुद्रव्यस्य तु निःक्रियत्वेन गतिमत्वाभावात्, परमाणूनां तु परस्परमुभयपृथग्गतिमत्वमुभयोरपि परमाण्वोः पृथक् पृथग्गतिमत्वसंभवात् । नचैतद्द्वितयमपि परस्परं विभुद्रव्यविशेषाणां सभवति। तथैकद्रव्याश्रयाणां गुणकर्मसामान्यानां च परस्पर पृथगाश्रयवृत्तेरभावात् युतसिद्धिः कथं नु स्यादिति वितर्कयतु भवंतः। तेषां युतसिद्ध्यभावे चायुतसिद्धौ सत्यां समवायोऽन्योन्यं प्रसज्येत स च नेष्टः तेषामाश्रयाश्रयिभावाभावात्। अत्र केचिद्विभुद्रव्यविशेषाणामन्योन्यं नित्यसंयोगमाचक्षते तस्य कुतश्चिदजातत्वात्। नह्ययमन्यतरकर्मजो यथा स्थाणोः श्येनेन। विभूनां च मूर्तैः, नाप्युभयकर्मजो यथा मेषयोर्मल्लयोर्वा। न च संयोगजो यथा द्वितंतुकवीरणयोः शरीराकाशयोर्वा। स्वावयवसंयोगपूर्वको ह्यवयविनः केनचित्संयोगः प्रसिद्धः । न चाकाशादीनामवयवाः संति निरवयवत्वात् ततो न तत्संयोगपूर्वकः परस्परं संयोगो यतः संयोगजःस्यात् प्राप्तिस्तु तेषां सर्वदाऽस्तीति तल्लक्षणसंयोगः, अजएवाभ्युपगतव्यः। तत्सिद्धेश्च युतसिद्धिस्तेषां प्रतिज्ञातव्या। युतसिद्धानामेव संयोगस्य निश्चयात्। नचैवं ये ये युतसिद्धास्तेषां सह्यहिमवदादीनामपि संयोगः प्रसज्यते तथाव्याप्तेरभावात् संयोगेन हि युतसिद्धत्वं व्याप्तं न युतसिद्धत्वेन संयोगः ततो यत्र यत्र संयोगस्तेषां तत्र तत्र युतसिद्धिरित्यनुमीयते कुंडवदरादिवत्। एवं चैकद्रव्याश्रयाणां गुणादीनां संयोगस्यासंभवान्न युतसिद्धिः तस्य गुणत्वेन द्रव्याश्रयत्वात् तदभावान्न युतासिद्धिः नाप्ययुतसिद्धिरस्तीति समवायः प्राप्नुयात् तस्येहेदं प्रत्ययलिंगत्वादाधार्याधारभूतपदार्थविषयत्वाच्च। नचैते परस्परमाधार्याधारभूताःस्वाश्रयेण द्रव्येण सहाधार्याधारभावात्। नचेहेदमिति प्रत्ययस्तत्राबाधितः संभवति यल्लिंगः संबंधः समवायो व्यवस्थाप्यते। न हीहरसे रूपं कर्मेतिचाबाधितः प्रत्ययोऽस्ति नापीह सामान्ये कर्म गुणोवेति न ततः समवायःस्यात् नहि यत्र यत्रायुतसिद्धिस्तत्रतत्र समवाय इति व्याप्तिरस्ति यत्र यत्र समवायस्तत्र तत्रायुतसिद्धिरितिव्याप्तेः संप्रत्ययादिति सर्वं निरवद्यं परोक्तदूषणानवकाशात् इति त एवं वदतः शंकरादयोऽपि पर्यनुयोज्याः कथं पृथगाश्रयाश्रयित्वं युतसिद्धिः नित्यानां च पृथग्गतिमत्वमिति

युतसिद्धेर्लक्षणद्वयमप्यापि न स्यात् तस्य विभुद्रव्येष्वजसंयोगेनानुमितायां युतसिद्धावभावात्। यदि पुन-रेतल्लक्षणद्वयस्याविक्रमेण संयोगहेतुर्युतसिद्धिरिति लक्षणांतरमुररीक्रियते तदा कुंडबदरादिषु परमाण्वाकाशादिषु परमाण्वात्ममनस्सु विभुद्रव्येषु च परस्परं युतसिद्धेर्भावाल्लक्षणस्याव्याप्त्यतिव्याप्त्यसंभवदोषपरिहारेऽपि क्रमोऽपि युतसिद्धिं प्राप्नोति तस्यापि संयोगे हेतुत्वाददृष्टेश्वरकालादेरिवेति तु लक्षणस्यातिव्याप्तिः परिहर्तुं । संयोगस्यैव हेतुरित्यवधारणाददोषोऽयमिति चेन्न । एवमपि हिमवद्विंध्यादीनां युतसिद्धेः संयोगाहेतोरपि प्रसिद्धेर्लक्षणस्याव्याप्तिप्रसंगात्। हेतुरेव संयोगस्येत्यवधारणादयमपि न दोष इति चेन्न । एवमपि संयोगहेतोर्युतसिद्धेः प्रसंगात् ॥ संयोगस्यैव हेतुर्युतसिद्धिरित्यवधारणेऽपि विभागहेतुर्युतसिद्धिः कथमिव व्यवस्थाप्यते ॥ न च युतसिद्धानां संयोग एव विभागस्यापि भावात् संयोगो विभागहेतुरिष्यत एव । तस्य तद्विरोधिगुणत्वात् तद्विनाशहेतुगुणत्वात्॥ संयुक्तविषयत्वाद्विभागस्य संयोगो हेतुरिति चेन्न तर्हि विभक्तविषयत्वात्संयोगस्य विभागो हेतुरस्तु । कयोश्चित्विभक्तयोरप्युभयकर्मणोऽन्यतरकर्मणोऽवयवसंयोगस्य चापाये संयोगापायाच्च विभागः संयोगहेतुरिति चेत् तर्हि संयुक्तयोरप्युभयकर्मणोऽन्यतरकर्मणोऽवयवविभागस्य चापाये विभागस्याभावात्संयोगो विभागस्यापि हेतुर्माभूत्। कथं च शश्वदविभक्तानां विभुद्रव्यविशेषाणामजः संयोगः सिध्यन्नविभागहेतुकोऽप्यवस्थाप्यते । तत्र युतसिद्धिर्विभागहेतुरपि कथमवस्थाप्यते इति चेत् सर्वस्य हेतोः कार्योत्पादमानियमादिति ब्रूमः । समर्थो हि हेतुः स्वकार्यमुत्पादयति नासमर्थः सहकारिकारणानपेक्षोऽतिप्रसंगात् ॥ तेन यथा हिमवद्विंध्यादीनां युतसिद्धिर्विद्यमानापि न संयोगमुपजनयति सहकारिकारणस्य कर्मादेरभावात् तथा विभुद्रव्यविशेषाणां शाश्वतिका युतसिद्धिः सत्यपि न विभागं, सहकारिकारणस्यान्यतरकर्मादेरभावादिति संयोगहेतुं युतसिद्धिमभ्युपगच्छतो विभागहेतुमपि सामर्थ्यमुपगच्छतु सर्वथा विशेषाभावात् तथा च संयोगस्यैव हेतुर्युतसिद्धिरित्यपि लक्षणं न व्यवतिष्ठत एव लक्षणाभावे च न युतसिद्धिः नापि युतसिद्ध्यभावलक्षणा स्यादयुतसिद्धिरिति युतसिद्ध्ययुतसिद्धिविरहापाये व्याघातो दुरुत्तरः स्यात् सर्वत्र संयोगसमवाययोरभावात् सकलं गृहीतं सकलकार्यहानिः स्यादित्यभिप्रायः । संयोगापाये तावदात्मांतःकरणसंयोगात् बुद्ध्यादिगुणोत्पत्तिर्न भवेत् तदभावे च आत्मनोऽव्यवस्थापनोपायापायादात्मतत्त्वहानिः ॥ एतेन भेरीदंडाद्याकाशसंयोगाभावाच्छब्दस्यानुत्पत्तेराकाशव्यवस्थापनोपायाभावादाकाशहानिरुक्ता सर्वत्रावयवसंयोगाभावात्तद्विभागस्याप्यनुपपत्तेस्तन्निमित्तस्यापि शब्दस्याभावात् । एतेन परमाणुसंयोगाभावाद्व्यणुकादिप्रक्रमेणावयविनोऽनुत्पत्तेस्तत्र परापरादिप्रत्ययापायात् इदमतः पूर्वेणेत्यादिप्रत्ययापायाच्च न कालो दिक् च व्यवतिष्ठत इत्युक्तं । तथा समवायासत्त्वे सकलसमवायिनामभावाच्च मनःपरमाणवोऽपि संभाव्यंते इति सकलद्रव्यपदार्थहानेस्तदाश्रयगुणकर्मसामान्यविशेषपदार्थहानिरपीति सकलपदार्थव्याघातात् दुरुत्तरो वैशेषिकमतस्य व्याघातः स्यात् तं परिजिहीर्षता युतसिद्धिः कुतश्चिद्व्यवस्थापनीया ॥ तत्र–

युतप्रत्ययहेतुत्वाद्युतसिद्धिरितीरणे

विभुद्रव्यगुणादीनां युतसिद्धिः समागता ॥४८॥

यथैव हि कुंडबदरादिषु युतप्रत्ययहेतुत्वं कुंडादिभ्यो बदरादयो युता इति तथा विभुद्रव्यविशेषेषु महत्स्वेषु गुणगुणिषु क्रियाक्रियावत्सु सामान्यतद्वत्सु विशेषतद्वत्सु चावयवावयविषु च युतप्रत्ययोऽभवन्नेवेति युतसिद्धिः समागता सर्वत्रायुतप्रत्ययस्याभावात् । देशभेदाभावात्तत्र न युतप्रत्यय इति चेन्न । वाताऽऽतपादिषु युतप्रत्ययानुत्पत्तिप्रसंगात् ॥ तेषां स्वाश्रयेषु भिन्नेषु देशेषु वृत्तेस्तत्र युतप्रत्यय इति चेत् किमेवं तंतुपटादिषु पटरूपादिषु च युतप्रत्ययः प्रतिषिध्यते स्वाश्रयेषु भिन्नेषु वृत्तेरविशेषात् तथा च न तेषामयुतसिद्धिः । ततो न युतप्रत्ययहेतुत्वेन युतसिद्धिर्व्यवतिष्ठते । तदव्यवस्थानाच्च किं स्यादित्याह ॥

यतो नायुतसिद्धिः स्यादित्यसिद्धं विशेषणं ।

हेतोर्विपक्षतस्तावद्व्यवच्छेदं न साधयेत् ॥४९॥

सिद्धेऽपि समवायस्य समवायिषु दर्शनात् ।
इहेदमिति संवित्तेः साधनं व्यभिचारि तत् ५०॥

तदेवमयुतसिद्धेरसंभवे सत्यामयुतसिद्धाविति विशेषणं तावदसिद्धविपक्षादसमवायात्संयोगादेर्व्यवच्छेदं न साधयेत् संयोगादिना व्यभिचारस्याबाधितेहेदंप्रत्ययस्य हेतोर्दुःपरिहारत्वात् केवलमभ्युपगम्यायुतसिद्धत्वं विशेषणं हेतोरनैकांतिकत्वमुच्यते । सिद्धेऽपि विशेषणे साधनस्येहसमवायिषु समवायइत्ययुतसिद्धबाधितेहेदंप्रत्येन साधनमेतत् व्यभिचारि कथ्यते । नह्ययमयुतसिद्धबाधितेहेदं प्रत्ययः समवायहेतुक इति । नन्वबाधितत्वविशेषणमसिद्धमिति परमतमाशंक्याह ॥

समवायांतराद्वृत्तौ समवायस्य तत्वतः ।
समवायिषु तस्यापि परस्मादित्यनिष्ठितिः ५१॥
तद्बाधाऽस्तीत्यबाधत्वं नाम नेह विशेषणं ।
हेतोःसिद्धमनेकांतो यतोऽनेनेति ये विदुः ॥५२॥
तेषामिहेति विज्ञानाद्विशेषणविशेष्यता ।
समवायस्य तद्वत्सु तत एव न सिध्यति ॥५३॥
विशेषणविशेष्यत्वसंबंधोऽप्यन्यतो यदि ।
स्वसंबंधिषु वर्तेत तदा बाधाऽनवस्थितिः ॥ ५४ ॥

इह समवायिषु समवाय इति समवायसमवायिनोरयुतसिद्धत्वे समवायस्य पृथगाश्रयाभावात्प्रसिद्धे सतीहेदमिति संवित्तेरबाधितत्वविशेषणस्याभावात् न तया साधनं व्यभिचरेत् तत्रानवस्थाया बाधिकायाः सद्भावात् तथाहि समवायिषु समवयस्य वृत्तिः समवायांतराद्यदीष्यते तदा तस्यापि समवायांतरस्य समवायसमवायिषु स्वसंबंधिषु वृत्तिरपरापरसमवायरूपेषितव्या तथाचापरापरसमवायपरिकल्पनायामनिष्ठितिःस्यात् तथैक एव समवायस्तत्वं भावेन व्याख्यातमिति सिद्धांतस्य चानिष्ठितिः सैवेहेदमिति प्रत्ययस्य बाधा ततोनाबाधत्वं नाम विशेषणं हेतोर्येनाऽनेकांतःस्यादिति ये वदंति तेषां विशेषणविशेष्यत्वसंबंधोऽपि समवायिषु समवाय इति प्रत्ययान्न सिध्येदनवस्थायाः सद्भावात् विशेषणविशेष्यभावो हि समवायसमवयिनां परैरिष्टः समवायस्य विशेषणत्वात् समवायिनां विशेष्यत्वात् अन्यथा समवायप्रतिनियमानुपपत्तेः ॥ सच समवायसमवायिभ्योऽर्थांतरमेव न पुनरनर्थांतरं समवायस्यापि समवायिभ्योऽनर्थांतरापत्तेः सचार्थांतरभूतोविशेषणविशेष्यभावः संबंधः स्वसंबंधिषु परस्मादेव विशेषणविशेष्यभावात्प्रतिनियतःस्यात् नान्यथा तथाचापरापरविशेषणविशेष्यभावपरिकल्पनायामनवस्था बाधा तदवस्थैव ततस्तया सबाधादिहेदमिति प्रत्ययाद्विशेषण विशेष्यभावोऽपि न सिध्येदिति कुतःसमवायप्रतिनियमः क्वचिदेव समवयिषु परेषां स्यात् ॥

विशेषणविशेष्यत्वप्रत्ययादवगम्यते ।
विशेषणविशेष्यत्वमित्यप्येतेन दूषितं ॥५५॥

यथेह समवायिषु समवाय इतीहेदंप्रत्ययादनवस्थया बाध्यमानात् समवायवद्विशेषणाविशेष्यभावो न सिध्येदिति तथा विशेषणविशेष्यत्वप्रत्ययादप्यनवस्थया बाध्यमानत्वाविशेषात् ततोऽनेनेहेदंप्रत्ययदूषणेन विशेषणविशेष्यत्वप्रत्ययोऽपि दूषित एव. तेनैव च तद्दूषणेन विशेषणविशेष्यत्वं सर्वत्र दूषितमवगम्यतां ॥ अत्रानवस्थापरिहारं परेषामाशंक्य निराचष्टे ॥

तस्यानंत्यात्प्रपत्तॄणामाकांक्षाक्षयतोऽपि वा ।
न दोष इति चेदेवं समवायादिनापि किं ॥ ५६ ॥
गुणादिद्रव्ययोर्भिन्नद्रव्ययोश्च परस्परं ।
विशेषणविशेष्यत्वसंबंधोऽस्तु निरंकुशः ॥ ५७ ॥
संयोगः समवायो वा तद्विशेषोऽस्त्वनेकधा ।
स्वातंत्र्ये समवायस्य सर्वथैक्ये च दोषतः ॥ ५८ ॥

तस्य विशेषणविशेष्यभावस्यानंत्यात्समवायवदेकत्वानभ्युपगमात् नानवस्था दोषो यदि परै: कथ्यते प्रपत्तॄणामाकांक्षाक्षयतोऽपि वा यत्र यस्य प्रतिपत्तुर्व्यवहारपरिसमाप्तेराकांक्षाक्षयः स्यात् तत्रापरविशेषणविशेष्यभावानन्वेषणादनवस्थानुपपत्तेः तदा समवायादिनापि परिकल्पितेन न किंचित्प्रयोजनमुपलक्ष्यामहे समवायिनोरपि विशेषणविशेष्यभावस्यैवाभ्युपगमनीयत्वात् संयोगिनोरपि विशेषणविशेष्यभावानतिक्रमात् । गुणद्रव्ययोः क्रियाद्रव्ययोः द्रव्यत्वद्रव्ययोः गुणत्वगुणयोः कर्मत्वकर्मणोः गुणत्वद्रव्ययोः कर्मत्वद्रव्ययोः विशेषद्रव्ययोश्च द्रव्ययोरिव विशेषणविशेष्यत्वस्य साक्षात्परंपरया वा प्रतीयमानस्य बाधकाभावात् । यथैव हि गुणिद्रव्यं क्रियावद्द्रव्यं द्रव्यत्ववद्द्रव्यं विशेषवद्द्रव्यं गुणत्ववान्गुणः कर्मत्ववत्कर्मेत्यत्र साक्षाद्विशेषणविशेष्यभावः प्रतिभासते दंडिकुंडलिवत् तथा परंपरया गुणत्ववद्द्रव्यमित्यत्र गुणस्य द्रव्यविशेषणत्वात् गुणत्वस्य च गुणविशेषणत्वात् विशेषणविशेष्यभावोऽपि तथा कर्मत्ववद्द्रव्यमित्यत्रापि कर्मत्वस्य कर्मविशेषणत्वात् कर्मणो द्रव्यविशेषणत्वात् विशेषणविशेष्यभाव एव निरंकुशोऽस्तु ॥ ननु च देवदत्तपार्श्वनामकयो: कथ्यादीनां च संयोगः समवायश्च विशेषणविशेष्यभावहेतुः संप्रतीयते तस्य तद्भाव एवाभावादिति न मंतव्यं । तदभावेऽपि विशेषणविशेष्यभावस्य सद्भावात् धर्मधर्मिवत् भावाभाववद्वा । नहि धर्मधर्मिणोः संयोगः तस्य द्रव्यनिष्ठत्वात् । नापि समवायः परैरिष्यते । समवायतद्वतोस्तयोः समवायांतरप्रसंगात् ॥ तथा न भावाभावयोः संयोगः समवायो वा परैरिष्टः सिद्धांतविरोधात् तयोर्विशेषणविशेष्यभावस्तु तैरिष्टो दृष्टश्चेति न संयोगसमवायाभ्यां विशेषणविशेष्यभावो व्याप्तः, तेन तयो र्व्याप्त्यसिद्धिः न हि विशेषणविशेष्यभावस्याभावे क्वचित्संयोगः समवायो वा व्यवतिष्ठते ॥ क्वचिद्विशेषणविशेष्यभावाविवक्षायां तु संयोगसमवायव्यवहारो न विशेषणविशेष्यभावस्याव्यापकत्वं व्यवस्थापयितुमलं । ततोऽप्यनर्थांतरत्वादेर्विवक्षानुपपत्तेर्व्यापकत्वमसिद्धेः । ततः संयोगः समवायो वा अन्योऽन्याविनाभावादिः सर्वथैकस्यैव विशेषणविशेष्यभावस्य विशेषोऽस्तु ॥ ननु च समवायस्य स्वतंत्रत्वादेकत्वाच्च कथमसौ तद्विशेषः स्यादित्यत्र इति चेत् समवायस्य स्वतंत्रत्वे सर्वथैकत्वे च दोषसद्भावात् ॥ तथाहि—

स्वतंत्रस्य कथं तावदाश्रितत्वं स्वयं मतं ।
तस्याश्रितत्वे वचने स्वातंत्र्यं प्रतिहन्यते ॥ ५९ ॥
समवायिषु सत्स्वेव समवायस्य वेदनात् ।
आश्रितत्वे दिगादीनां मूर्तद्रव्याश्रितिर्न किं ॥ ६० ॥
कथं चानाश्रितः सिध्येत्संबंधः सर्वथा क्वचित् ।
स्वसंबंधिषु येनातः समवेन्नियतस्थितिः ॥६१॥

एक एव च सर्वत्र समवायो यदीष्यते ।
तदा महेश्वरे ज्ञानं समवैति न खे कथं ॥६२॥
इहेति प्रत्ययोऽप्येष शंकरे न तु खादिषु ।
इति भेदःकथंसिध्येन्नियामकमपश्यतः ॥६३॥
न चाचेतनता तत्र संभाव्येत नियामिका ।
शंभावपि तदास्थानात् खादेस्तदविशेषतः ॥६४॥
नेशो ज्ञाता न चाज्ञाता स्वयं ज्ञानस्य केवलं ।
समवायात्सदा ज्ञाता यद्यात्मैव स किं स्वतः ॥६५॥
नायमात्मा न चानात्मा स्वात्मत्वसमवायतः ।
सदात्मैवेतिचेदेवं द्रव्यमेव स्वतोऽसिधत् ॥६६॥
नेशो द्रव्यं न चाद्रव्यं द्रव्यत्वसमवायतः ।
सर्वदा द्रव्यमेवेति यदि सन्नेव स स्वतः ॥६७॥
न स्वतः सन्नसच्चापि सत्वेन समवायतः ।
सच्चेव शश्वदित्युक्तौ व्याघातः केन वार्यते ॥६८॥
स्वरूपेणासतः सत्वसमवाये च खांबुजे ।
स स्यात् किं न विशेषस्याभावात्तस्य ततोंऽजसा ॥६९॥
स्वरूपेण सतःसत्वसमवायेपि सर्वदा ।
सामान्यादौ भवेत्सत्वसमवायोऽविशेषतः ॥७०॥
स्वतः सतो यथा सत्त्वसमवायस्तथास्तु सः ।
द्रव्यत्वात्मत्वबोद्धृत्वसमवायोऽपि तत्त्वतः ॥ ७१ ॥
द्रव्यस्यैवात्मनो बोद्धुःस्वयं सिद्धस्य सर्वदा ।
नहि स्वतो तथाभूतस्तथात्वसमवायभाक् ॥ ७२ ॥
स्वयं ज्ञत्वे च सिद्धेऽस्य महेशस्य निरर्थकं ।
ज्ञानस्य समवायेन ज्ञत्वस्य परिकल्पनं ॥ ७३ ॥
तत्स्वार्थव्यवसायात्मज्ञानतादात्म्यमृच्छतः ।
कथं चिदीश्वरस्याऽस्ति जिनेशत्वमसंशयं ॥ ७४ ॥
स एव मोक्षमार्गस्य प्रणेता व्यवतिष्ठते ।
सदेहःसर्वविन्नष्टमोहो धर्मविशेषभाक् ॥ ७५ ॥

ज्ञानादन्यस्तु निर्देहः सदेहो वा न युज्यते ।
शिवः कर्तोपदेशस्य सोऽभेत्ता कर्मभूभृतां ॥ ७६ ॥

स्वतन्त्रत्वे हि समवायस्य षण्णामाश्रितत्वम् "अन्यत्र नित्यद्रव्येभ्यः" इति कथमाश्रितस्य स्वयं वैशेषिकैरिष्टमिति तन्त्रविरोधो दोषः । तस्याश्रितत्वप्रतिपादने स्वतंत्रत्वविरोधात् । पराश्रितत्वं हि पारतन्त्र्यं तेन स्वातन्त्र्यं कथं न प्रतिहन्यते । स्यान्मतं न परमार्थतः समवायस्याश्रितत्वं धर्मः कथ्यते यतस्तन्त्रविरोधः स्यात् किंतूपचारात् निमित्तत्वोपचारस्य समवायिषु सत्सु समवायज्ञानं समवायिशून्ये देशे समवायज्ञानासंभवात् परमार्थतस्तस्याश्रितत्वे आश्रयनाशात् विनाशप्रसंगात् गुणादिवदिति । तदसत् । दिगादीनामप्येवमाश्रितत्वप्रसंगात् । मूर्तद्रव्येषु सत्सूपलक्षणप्राप्तेषु दिग्लिंगस्येदमतः पूर्वेणेत्यादिप्रत्ययस्य काललिंगस्य च परत्वापरत्वादिप्रत्ययस्य सद्भावात् मूर्तद्रव्याश्रितत्वोपचारप्रसंगात् । तथा चान्यत्र नित्यद्रव्येभ्य इति व्याघातः नित्यद्रव्यस्यापि दिगादेरुपचारादाश्रितत्वसिद्धेः । सामान्यस्यापि परमार्थतोऽनाश्रितत्वमनुषज्यते आश्रयविनाशेऽपि विनाशाभावात् समवायवत्तथेष्टं स्वाभ्युपगमविरुद्धं वैशेषिकाणां, उपचारतोऽपि समवायस्याश्रितत्वे स्वातन्त्र्यं वा । किंच समवायो न संबंधः सर्वथाऽनाश्रितत्वात् यो यः सर्वथाऽनाश्रितः स स न संबंधो यथा दिगादिः, सर्वथाऽनाश्रितश्च समवायः तस्मान्न संबंध इति इहेदं प्रत्ययलिंगो यः स समवायो न स्यात् अयुतसिद्धानामाधार्याधारभूतानामपि संबंधांतरेणाश्रितेन भवितव्यं संयोगादेरसंभवात् । समवायस्याप्यनाश्रितस्य संबंधत्वविरोधात् । स्यादाकूतं । समवायस्य धर्मिणोऽप्रतिपत्तौ हेतोराश्रयासिद्धत्वं । प्रतिपत्तौ धर्मिग्राहकप्रमाणबाधितः पक्षो हेतुश्च कालात्ययापदिष्टः प्रसज्येत । समवायो हि यतः प्रमाणात्प्रतिपन्नस्तत एवायुतसिद्धसंबंधत्वं प्रतिपन्नमयुतसिद्धानामेव संबंधस्य समवायव्यपदेशसिद्धेरिति । तदपि न साधीयः । आगमादिप्रसिद्धेन प्रमाणेनाश्रितस्यैव समवायस्याविष्वग्भावलक्षणस्य प्रतिपत्तेस्तस्यानाश्रितत्वाभ्युपगमे चासंबंधत्वस्य प्रसंगेन साधनात् । साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ परस्य व्याप्याभ्युपगमे नांतरीयकस्य व्यापकाभ्युपगमस्य प्रतिपादनात् । न चानाश्रितत्वमसंबंधत्वेन व्याप्तं दिगादिष्वसिद्धं । नाप्यनैकांतिकमनाश्रितस्य कस्यचित्संबंधत्वाप्रसिद्धेः विपक्षे वृत्त्यभावात् तत एव न विरुद्धं । नापि सत्प्रतिपक्षं तस्यानाश्रितस्यापि संबंधत्वव्यवस्थापकानुमानाभावादिति न परेषां समवायः संबंधोऽस्ति यतः प्रतिनियमः कस्यचित्कचित्समवायिनि व्यवस्थाप्यते । भवतु वा समवायः । किमेकोऽनेको वा । यदि सर्वत्रैक एव समवायोऽभ्युपगम्यते तदा महेश्वरे ज्ञानं समवैति न पुनराकाशे दिगादौ चेति कथमवबुध्यते । इहेति प्रत्ययादिति चेन्न तस्येह शंकरे ज्ञानमिति प्रत्ययस्यैकसमवायहेतुकस्य खादिष्वपि संभवेन शंकर एव ज्ञानसमवायसाधनासमर्थत्वात् । नियामकादर्शनात्तदस्य व्यवस्थापयितुमशक्तेः । ननु च विशेषणभेद एव नियामकः सत्तावत् सत्ता हि द्रव्यादिविशेषणभेदादेकापि भिद्यमाना दृष्टा प्रतिनियतद्रव्यादिसत्त्वव्यवस्थापिका द्रव्यं सत् गुणः सन् कर्म सदिति, द्रव्यादिविशेषणविशिष्टस्य सत्प्रत्ययस्य द्रव्यादिविशिष्टसत्ताव्यवस्थापकत्वात् तद्वत्समवायिविशेषणविशिष्टेहेदंप्रत्ययादिविशिष्टसमवायिविशेषणस्य समवायस्य व्यवस्थितेः । समवायो हि यदुपलक्षितो विशिष्टप्रत्ययात्सिध्यति तत्प्रतिनियमहेतुरेवाभिधीयते यथेह तंतुषु पट इति तंतुपटविशिष्टेहेदं प्रत्ययात्तंतुष्वेव पटस्य समवायो नियम्यते न वीरणादिषु न चायं विशिष्टेहप्रत्ययः सर्वस्य प्रतिपत्तुः प्रतिनियतविषयः समनुभूयमानः पर्यनुयोगार्हः किमितिभवन् तत्रैव प्रतिनियतोऽनुभूयते न पुनरन्यत्रेति । तथा तस्य पर्यनुयोगे कस्यचित्स्वेष्टतत्त्वव्यवस्थानुपपत्तेः । तद्व्यवस्थापकप्रत्ययस्यापि पर्यनुयोग्यत्वानिवृत्तेः । सुदूरमपि गत्वा यदि कस्यचित्प्रत्ययविशेषस्यानुभूयमानस्य पर्यनुयोगाविषयत्वात् । तदवश्यमवस्थितिरभ्युपगम्यते तदेहशंकरे ज्ञानमिति विशिष्टेहप्रत्ययात्प्रमाणोपपन्नात्तत्रैव ज्ञानसमवायो व्यवतिष्ठते न खादिषु । विशेषणभेदात्समवायस्य भेदप्रसिद्धेरिति केचिदभ्युपगमवैशेषिकाः

समनुमन्यंतोऽपि न यथार्थवादिनः । समवायस्य सर्वथैकत्वे नानासमवायिविशेषणत्वायोगात्, सत्तादृष्टांतस्यापि साध्यत्वात् नहि सर्वथैका सत्ता कुतश्चित्प्रमाणात्सिद्धा । ननु सत्प्रत्ययाविशेषा-द्विशेषलिंगाभावादेका सत्ता प्रसिद्धैवेति चेन्न । सर्वथा सत्प्रत्ययाविशेषस्यासिद्धत्वाद्विशिष्टलिंगाभावस्य च कथंचित्सत्प्रत्ययाविशेषस्तु कथंचिदेवैकत्वं सत्तायाः साधयेत्, यथैव हि सत्सामान्यादेशात् सत्स-दिति प्रत्ययस्याविशेषस्तथा सद्विशेषादेशात् सत्प्रत्ययविशेषोऽपि घटः सन् पटः सन्नित्यादिः समनु-भूयते । घटादिपदार्थ एव तत्र विशिष्टो न सत्तेति चेन्न । एवं घटादीनामपि सर्वथैकत्वप्रसंगात् । शक्यो हि वक्तुं घटप्रत्ययाविशेषादेकोघटः तद्धर्मा एव विशिष्टप्रत्ययहेतवो विशिष्टा इति । घटस्यैकत्वे क्वचिद्घटस्य विनाशे प्रादुर्भावे वा सर्वत्र विनाशः प्रादुर्भावो वा स्यात् । तथा च परस्परव्याघातः सकृद्घटविनाशप्रादुर्भावयोः प्रसज्यते इति चेन्न । सत्ताया अपि सर्वथैकत्वे कस्यचित्प्रागसतः सत्तायाः संबंधे सर्वस्य सकृत्सत्तासंबंधप्रसंगात् । तदसंबंधे वा सर्वस्यासंबंध इति परस्परव्याघातः सत्तासंबंधासंबंधयोः सकृत्तद्दुःपरिहारःस्यात् । प्रागसतः कस्यचिदुत्पादककारणसन्निधानादुत्पद्यमानस्य संबंधः परस्य तदभावात् संबंधाभाव इति प्रागुक्तदोषाऽप्रसंगे घटस्यापि क्वचिदुत्पादककारणभावादु-त्पादस्य धर्मस्य सद्भावे घटेन संबंधः क्वचित्तु विनाशहेतूपादानाद्विनाशस्य भावो घटस्य तेनासंबंध इति कुतः परोक्तदोषप्रसंगः । सर्वथैकत्वेऽपि घटस्य तद्धर्माणामुत्पादादीनां स्वकारणनियमाद्देशका-लाकारनियमोपपत्तेः । नह्युत्पादादयो धर्मा घटादनर्थांतरभूता एव सत्ताधर्माणामपि तदनर्थांतरत्वप्रसं-गात् । तेषां ततोऽर्थांतरत्वे घटादुत्पादादीनामर्थांतरत्वं प्रतिपत्तव्यं । तथाच त एव विशिष्टा न घट इति कथं न घटैकत्वमापद्यते । ननु घटस्य नित्यत्वे कथमुत्पादादयो धर्मा नित्यस्यानुत्पादाविनाश-धर्मकत्वादितिचेत् तर्हि सत्ताया नित्यत्वे कथमुत्पद्यमानैरर्थैः संबंधः प्रभज्यमानैश्चेति चिंत्यतां । स्वकारणवशादुत्पद्यमाना भज्यमानाश्चार्थाः शश्वदवस्थितया सत्तया संबंध्यंते । न पुनः शश्वदवस्थि-तेन घटेन स्वकारणसामर्थ्यादुत्पादादयो धर्माः संबंध्यंत इति स्वदर्शनपक्षपातमात्रं । घटस्य सर्वगतत्वे पदार्थांतराणामभावापत्तेरुत्पादादिधर्मकारणानामप्यसंभवात् कथमुत्पादादयो धर्माः स्युरितिचेत् सत्तायाः सर्वगतत्वेऽपि प्रागभावादीनां क्वचिदनुपपत्तेः कथमुत्पाद्यमानैः प्रभज्यमानैश्चार्थैः संबंधः सिध्येत् । प्रागभावाभावे हि कथं प्रागसतः प्रादुर्भवतः सत्तया संबंधः प्रध्वंसाभावाभावे हि कथं विनश्यतः पश्चादसतः सत्तायाः संबंधाभाव इति सर्व दुरवबोधं । स्यान्मतं सत्तायाः स्वाश्रयवृत्तित्वा-त्स्वाश्रयापेक्षया सर्वगतत्वं न सकलपदार्थापेक्षया सामान्यादिषु प्रागभावादिषु च तद्वृत्त्यभावात् तत्रा-चाधितस्य सत्प्रत्ययस्याभावाद्द्रव्यादिष्वेव तदनुभवादिति । तदपि स्वगृहमान्यं । घटस्याप्येवमबाधित घटप्रत्ययोत्पत्तिहेतुष्वेव स्वाश्रयेषु भावात् न सर्वपदार्थव्यापित्वं पदार्थांतरेषु घटप्रत्ययोत्पत्त्यहेतुषु तदभावादिति वक्तुं शक्यत्वात् । नन्वेको घटः कथमंतरालवर्तिपटाद्यर्थान् परिहृत्य नानाप्रदेशेषु दृवि-ष्टेषु भिन्नेषु वर्तते युगपदिति चेत् कथमेका सत्ता सामान्यविशेषसमवायान् प्रागभावादींश्च परिहृत्य-द्रव्यादिपदार्थान् सकलान् सकृद्व्याप्नोतीति समानः पर्यनुयोगः तस्याः स्वयममूर्तत्वात्केनाचित्प्रतिघा-ताभावाददोष इति चेत् तर्हि घटस्याप्यनभिव्यक्तिमूर्तेः केनचित्प्रतिबंधाभावात्सर्वगतत्वे को दोषः सर्वत्र घटप्रत्ययप्रसंग इति चेत् सत्तायाः सर्वगतत्वे सर्वत्र सत्प्रत्ययः किं न स्यात् । प्रागभावादिषु तस्यास्तु तिरोधानान्न सत्प्रत्ययहेतुत्वमिति चेत् घटस्यापि पदार्थांतरेषु तत्तिरोधानाद्घटप्रत्ययहेतुत्वं मा-भूत् । न चैवं सर्व सर्वत्र विद्यते इति वदतः सांख्यस्य किंचिद्विरुद्धं बाधकाभावात् तिरोधानावि-र्भावाभ्यां स्वप्रत्ययाविधानस्य क्वचित्स्वप्रत्ययविधानस्याविरोधात् । किंच घटादिसामान्यस्य घटादि-व्यक्तिष्वभिव्यक्तस्य तदंतराले चानभिव्यक्तस्य घटप्रत्ययहेतुत्वाहेतुत्वे स्वयमुररीकुर्वाणः कथं न घटस्य स्वव्यंजकदेशेऽभिव्यक्तस्यान्यत्र चानभिव्यक्तस्य घटप्रत्ययहेतुत्वाहेतुत्वे नाभ्युपगच्छतीति स्वेच्छाकारी। स्यान्मतं नानाघटः सकृद्भिन्नदेशतयोपलभ्यमानत्वात् पटकटमुकुटादिपदार्थांतरवदिति तर्हि नाना सत्ता युगपद्बाधकाभावे सति भिन्नदेशद्रव्यादिषूपलभ्यमानत्वात् तद्वदिति दर्शनांतरमायातं न्यायस्य

समानत्वात्। यदि विभिन्नदेशेषु घटपटादिषु युगपत्सत्त्वोपलम्भोऽसिद्धः सन्तोऽमी घटादय इति प्रतीतेरबाधितत्वात्। व्योम्नानेकान्तिकोऽयं हेतुरिति चेन्न। तस्य प्रत्यक्षतोऽभिन्नदेशतयाऽतीन्द्रियस्य युगपदुपलम्भाभावात्। परेषां युगपद्भिन्नदेशाकाशलिङ्गशब्दोपलम्भासम्भवान्नानुमानतोऽपि भिन्नदेशतया युगपदुपलम्भोऽस्ति यतस्तेनानैकान्तिकत्वं हेतोरभिधीयते। नानादेशाकाशलिङ्गशब्दानां नानादेशस्थपुरुषैः श्रवणादाकाशस्यानुमानात् युगपद्भिन्नदेशतयोपलम्भस्य प्रसिद्धावपि न तेन व्यभिचारः साधनस्य तस्य प्रदेशभेदाभावासिद्धेः। निःप्रदेशस्य युगपद्भिन्नदेशकालस्वकल्पमूर्तिमद्द्रव्यसंयोगानामनुपपत्तेरेकपरमाणुवन्न चेयं सत्ता स्वतन्त्रः पदार्थः सिद्धः पदार्थधर्मत्वेन प्रतीयमानत्वादसत्त्ववत्। यथैव हि घटस्यासत्त्वं पटस्यासत्त्वमिति पदार्थधर्मतया प्रतीयमानत्वादसत्त्वं स्वतन्त्रः पदार्थः तथा घटस्य सत्त्वं पटस्य सत्त्वमिति पदार्थधर्मत्वेनोपलभ्यमानत्वात्सत्त्वमपि सर्वथा विशेषाभावात्सर्वत्र घटः सन् पटः सन् इति प्रत्ययस्याविशेषादेकं सत्त्वं पदार्थधर्मत्वेऽपीति चेत् तर्हि सर्वत्रासदिति प्रत्ययस्याविशेषाद्भावपरतन्त्रत्वेऽप्येकमसत्त्वमभ्युपगम्यतां प्रागसत्प्रध्वस्तमसदितरत्रासदत्यन्तमसदिति प्रत्ययविशेषात् प्रागसत्त्वप्रध्वंसासत्त्वेतरेतरासत्त्वात्यन्तासत्त्वभेदसिद्धेर्नैकमसत्त्वमिति चेत्। नन्वेवं विनाशात्पूर्वं सत्त्वं प्राक्सत्त्वं स्वरूपलाभादुत्तरं सत्त्वं पश्चात्सत्त्वं समानजातीययोः केनचिद्रूपेणेतरेतरत्र सत्त्वमितरेतरसत्त्वं कालत्रयेऽप्यनापन्नसत्त्वमत्यन्तसत्त्वमिति सत्प्रत्ययः किं नानुमन्यते सत्प्रत्ययस्यापि प्राक्कालादितया विशेषसिद्धेर्बाधकाभावात् यथा चासत्त्वस्य सर्वथैकत्वे कस्यचित्कार्योत्पत्तौ प्रागभावविनाशे सर्वत्राभावविनाशप्रसङ्गात्। न किंचित्प्रागसदिति सर्वकार्यमनादि स्यात्। न किंचित्प्रध्वस्तमसदिति सर्वमनन्तं स्यात् न कश्चित्किंचिदसदिति सर्वं सर्वात्मकं स्यात् न कश्चिदत्यन्तमसदिति सर्वं सर्वत्र सर्वथा प्रसज्येतेति बाधकमपि तथा सत्त्वैकत्वे समानमुपलभामहे कस्यचित्प्रध्वंसे सत्त्वाभावे सर्वत्र सत्त्वाभावप्रसङ्गात् न किंचित्कुतश्चित्प्राक् सत् पश्चात्सत् नापीतरत्रेतरत्सत् स्यात् अत्यन्तसदेवेति सर्वशून्यतापत्तिर्दुःशक्यापरिहर्तुं। तां परिजिहीर्षता सत्त्वस्य भेदोऽभ्युपगन्तव्य इति नैका सत्ता सर्वथा सिध्यत्सत्तावदनेकपर्यायतोपपत्तेः। स्यान्मतिरेषा ते कस्यचित्कार्यस्य प्रध्वंसेऽपि न सत्तायाः प्रध्वंसस्तस्या नित्यत्वात् पदार्थान्तरेषु सत्प्रत्ययहेतुत्वात् प्राक्कालादिविशेषणभेदेऽप्यभिन्नत्वात् सर्वथा शून्यतां परिहरतोऽपि सत्ताभेदपर्यायतानुपपत्तिरिति सापि न साधीयसी कस्यचित्कार्यस्योत्पादेऽपि प्रागभावस्याभावानुपपत्तिप्रसङ्गात् तस्य नित्यत्वात्। पदार्थान्तराणामुत्पत्तेः पूर्वं प्रागभावस्य स्वप्रत्ययहेतोः सद्भावसिद्धेः समुत्पन्नकार्यविशेषणतया विनाशव्यवहारेऽपि प्रागभावस्याविनाशिनो नानानुत्पन्नकार्यापेक्षया विशेषणभेदेऽपि भेदाभावादेकत्वाविरोधात्। ननूत्पत्तेः पूर्वं घटस्य प्रागभावः पटस्य प्रागभाव इत्यादि विशेषणभेदेऽप्यभावोऽभिधीयते घटस्य सत्ता पटस्य सत्तेत्यादिविशेषणभेदेऽपि सत्तावत्। ननु प्रागभावस्य नित्यत्वे कार्योत्पत्तिर्न स्यात्तस्य तत्प्रतिबन्धकत्वात्तदप्रतिबन्धकत्वे प्रागपि कार्योत्पत्तेः कार्यस्यानादित्वप्रसङ्ग इति चेत् तर्हि सत्ताया नित्यत्वे कार्यस्य प्रध्वंसो न स्यात् तस्यास्तत्प्रतिबन्धकत्वात् तदप्रतिबन्धकत्वे प्रध्वंसात् प्रागपि प्रध्वंसप्रसङ्गात्। कार्यस्य स्थितिरेव न स्यात् कार्यसत्ता हि प्रध्वंसात् प्राक् प्रध्वंसस्य प्रतिघातिकेति कार्यस्य स्थितिः सिध्येन्नान्यथा। यदि पुनर्बलवत्प्रध्वंसकारणसन्निपाते कार्यस्य सत्ता न प्रध्वंसं प्रतिबध्नाति ततः पूर्वं तु बलवद्विनाशकारणाभावात् प्रध्वंसं प्रतिबध्नात्येव ततो न प्रागपि प्रध्वंसप्रसङ्ग इति मतं तदा बलवदुत्पादककारणोपधानात् कार्यस्योत्पादः प्रागभावसत्त्वमपि न विरुणद्धि कार्योत्पादनात्पूर्वं तदुत्पादककारणाभावात् तं विरुणद्धि ततो न प्रागपि कार्योत्पत्तिर्येन कार्यस्यानादित्वप्रसङ्ग इति प्रागभावस्य सर्वदा सद्भावो मन्यतां सत्तावत्। तथा चैक एव सर्वत्र प्रागभावोऽवतिष्ठते। प्रध्वंसाभावश्च न प्रागभावादर्थान्तरभूतः स्यात् कार्यविनाशविशिष्टस्य तस्यैव प्रध्वंसाभाव इत्यभिधानात् तस्यैवेतरेतरव्यावृत्तिविशिष्टस्येतरेतराभावाभिधानवत्॥ ननु च कार्यस्य विनाश एव प्रध्वंसाभावो न पुनस्ततोऽन्यः। येन विनाशविशिष्टः प्रध्वंसाभाव इत्यभिधीयते। नापीतरेतरव्यावृत्तिरितरेतराभावादन्यायेन तथा विशिष्टस्येतरेतराभावाभिधानमिति चेत् तर्हीदानीं कार्य-

स्योत्पादएव प्रागभावाभावस्ततोऽर्थांतरस्यासंभवात् कथं तेन कार्यस्यप्रतिबंधः सिध्येत् कार्योत्पादा-प्रागभावाभावस्यार्थांतरत्वे प्रागेव कार्योत्पादःस्यात् शश्वदभावाभावे शश्वत्सद्भाववत् । नह्यन्यदेवा-भावस्याभावोऽन्यदेव भावस्य सद्भाव इति अभावाभावसद्भावयोः कालभेदो युक्तः सर्वत्राभावाभा-वस्यैव भावसद्भावप्रसिद्धेः भावाभावस्याभावप्रसिद्धिवत् तथा च कार्यसद्भाव एव तदभावाभावः कार्याभाव एव च तद्भावस्याभाव इत्यभावविनाशवद्भावविनाशप्रसिद्धेः न भावाभावौ परस्परमतिश-याते यतस्तयोरन्यतरस्यैवैकत्वनित्यत्वे नानात्वानित्यत्वे वा व्यवतिष्ठेते ॥ तदनेनासत्वस्य नानात्वम-नित्यत्वं च प्रतिजानता सत्त्वस्यापि तत्प्रतिज्ञातव्यमिति कथंचिदेकैका सदिति प्रत्ययाविशेषात् । कथंचिदनेका प्राक्सदित्यादि सत्प्रत्ययभेदात् । कथंचिन्नित्या सैवेयंसत्तेतिप्रत्यभिज्ञानात् कथंचिदनित्या कालभेदात् पूर्वसत्ता पश्चात्सत्तेति सत्प्रत्ययभेदात् सकलबाधकाभावादनुमंतव्या तत्प्रतिपक्षभूताऽस-त्तावत् । ततः समवायिविशेषणविशिष्टेहेदं प्रत्ययहेतुत्वात् समवायः समवायिविशेषप्रतिनियमहेतु द्रव्यादिविशेषणविशिष्टसत्प्रत्ययहेतुत्वाद्द्रव्यादिविशेषप्रतिनियमहेतुः सत्तावदितिविषमउपन्यासः सत्ताया नानात्वसाधनात् तद्वत्समवायस्य नानात्वसिद्धेः सोऽपि हि कथंचिदेक एव इहेदंप्रत्यया-विशेषात् । कथंचिदनेक एव नानासमवायिविशिष्टेहेदंप्रत्ययभेदात् । कथंचिन्नित्य एव प्रत्यभिज्ञाय-मानत्वात् । कथंचिदनित्य एव कालभेदेन प्रतीयमानत्वात् । नचैकत्राधिकरणे परस्परमेकत्वानेकत्वे नित्यत्वानित्यत्वे वा विरुद्धे सकलबाधकरहितत्वे सत्युपलभ्यमानत्वात् कथंचित्सत्वासत्ववत् । यदप्य-भ्यधायि सत्त्वासत्त्वे नैकत्र वस्तुनि सकृत्संभवतस्तयोः विधिप्रतिषेधरूपत्वात् । ययोर्विधिप्रतिषेधरू-पत्वं ते नैकत्र वस्तुनि सकृत्संभवतो यथा शीतत्वाशीतत्वे । विधिप्रतिषेधरूपे च सत्त्वासत्त्वे तस्मान्नैकत्र वस्तुनि सकृत्संभवत इति । तदप्यनुपपन्नं वस्तुन्येकत्राभिधेयत्वानभिधेयत्वाभ्यां सकृत्संभवद्भ्यां व्यभिचारात् कस्यचित्स्वाभिधायकाभिधानापेक्षया अभिधेयत्वमन्याभिधायकाभिधानापेक्षया चानभि-धेयत्वं सकृदुपलभ्यमानमबाधितमेकत्राभिधेयत्वानाभिधेयत्वयोः सकृत्संभवं साधयतीत्यभ्यनुज्ञाने स्वरू-पाद्यपेक्षया सत्त्वं पररूपाद्यपेक्षया चासत्वं निर्बाधमनुभूयमानमेकत्र वस्तुनि सत्वासत्वयोः सकृत्संभवं किं न साधयेत् विधिप्रतिषेधरूपत्वाविशेषात् । कथंचिदुपलभ्यमानयोर्विरोधानवकाशात् येनैव स्वरूपेण सत्वं तेनैवासत्वमिति सर्वथाऽर्पितयोरेव सत्वासत्वयो युगपदेकत्र विरोधसिद्धेः । कथंचित्सत्वासत्व-योरेकत्र वस्तुनि सकृत्प्रसिद्धौ च तद्वदेकत्वानेकत्वयोर्नित्यत्वानित्यत्वयोश्च सकृदेकत्र निर्णयान्न किं-चिद्विप्रतिषिद्धं समवायस्यापि तथा प्रतीतेरबाधितत्वात् । सर्वथैकत्वे महेश्वर एव ज्ञानस्य समवाया-द्वृत्तिर्न पुनराकाशादिष्विति प्रतिनियमस्य नियामकमपश्यतो निश्चयासंभवात् । न चाकाशादीना-मचेतनता नियामिका चेतनात्मगुणस्य ज्ञानस्य चेतनात्मन्येव महेश्वरे समवायोपपत्तेरचेतनद्रव्यगगना-दौ तदयोगात् ज्ञानस्य तद्गुणत्वाभावादिति वक्तु युक्तं । शंभोरपि स्वतोऽचेतनत्वप्रतिज्ञानात् खादि-भ्यस्तस्य विशेषासिद्धेः । स्यादाकूतं नेश्वरः स्वतश्चेतनोऽचेतनो वा चेतनसमवायात्तु चेतयिता खाद-यस्तु न चेतनासमवायाच्चेतयितारः कदाचिदतोऽस्ति तेभ्यस्तस्य विशेष इति । तदप्यसत् । स्वतोमहे-श्वरस्य स्वरूपानवधारणान्निःस्वरूपतापत्तेः । स्वयं तस्यात्मरूपत्वान्न स्वरूपहानिरितिचेन्न । आत्मनाऽप्या-त्मत्वयोगादात्मत्वेन व्यवहारोपगमात् स्वतोऽनात्मत्वादात्मरूपस्याप्यसिद्धेः । यदि पुनः स्वयं नात्मा-महेशो नाप्यनात्मा केवलमात्मत्वयोगादात्मेति मतं । तदा स्वतः किमसौस्यात् ? द्रव्यमिति चेन्न । द्रव्य-त्वयोगाद्द्रव्यव्यवहारवचनात् । स्वतो द्रव्यस्वरूपेणापि महेश्वरस्याव्यवस्थितेः । यदि तु न स्वतोऽसौ द्रव्यं नाप्यद्रव्यं द्रव्यत्वयोगाद्द्रव्यमिति प्रतिपाद्यते । तदा न स्वयं द्रव्यं स्वरूपस्याप्यभावात् किंस्वरूपः शंभुर्भवेदिति वक्तव्यं । सन्नेव स्वयमसाविति चेन्न । सत्वयोगात्सन्निति व्यवहारसाधनात् स्वतः सद्रूपस्याप्रसिद्धेः । अथ न स्वतः सन्नाप्यसन् सत्वसमवायात्तु सन्नित्यभिधीयते तदा व्याघातो दुरु-त्तरः स्यात् सत्वासत्वयोरन्योन्यव्यवच्छेदरूपयोरेकतरस्य प्रतिषेधेऽन्यतरस्य विधानप्रसंगात् उभय-प्रतिषेधस्यासंभवात् । कथमेवं सर्वथा सत्वोसत्वयाः स्याद्वादिभिः प्रतिषेधे तेषां व्याघातो न भवेदितिचेन्न

दे कथंचित्सत्त्वासत्त्वयोर्विधानात् । सर्वथा सत्त्वासत्त्वे हि कथंचित्सत्त्वासत्त्वव्यवच्छेदेनाभ्युपगम्येते सर्वथा सत्त्वस्य कथंचित्सत्त्वस्य व्यवच्छेदेन व्यवस्थानात् । असत्त्वस्य च कथंचिदसत्त्वव्यवच्छेदेनेति सर्वथा सत्त्वस्य प्रतिषेधे कथंचिदसत्त्वस्य विधानात् । सर्वथा चासत्त्वस्य निषेधे कथंचित्सत्त्वस्य विधिरिति कथं सर्वथा सत्त्वासत्त्वप्रतिषेधे स्याद्वादिनां व्याघातो दुरुत्तरः स्यात्, सर्वथैकान्तवादिनामेव तस्य दुरुत्तरत्वात् ॥ एतेन द्रव्यत्वाद्रव्यत्वयोरात्मत्वानात्मत्वयोश्चेतनत्वाचेतनत्वयोश्च परस्परव्यवच्छेदरूपयोर्युगपत्प्रतिषेधे व्याघातो दुरुत्तरः प्रतिपादितः । तदेकतरप्रतिषेधेऽन्यतरस्य विधेरवश्यंभावात्, उभयप्रतिषेधस्यासंभवात् । कथंचित्सत्त्वासत्त्वयोर्वैशेषिकैरनभ्युपगमात् किं च स्वरूपेणासति महेश्वरे सत्त्वसमवाये प्रतिज्ञायमाने खांबुजे सत्त्वसमवायः परमार्थतः किं न भवेत्, स्वरूपेणासत्त्वाविशेषात् । खांबुजस्याभावाच्च तत्र समवायः पारमार्थिकः षट्सु द्रव्यगुणकर्मलक्षणे सत्त्वसमवायसिद्धेः । महेश्वरपदार्थद्रव्यविशेषसत्त्वसमवाय इति च स्वमनोरथमात्रं स्वरूपेणासतः कस्यचित्सद्वर्गत्वासिद्धेः ॥ स्वरूपेण सति महेश्वरे सत्त्वसमवायोपगमे सामान्यादावपि सत्त्वसमवायप्रसंगः स्वरूपेण सत्त्वाविशेषात् । यथैव हि महेश्वरस्य स्वरूपतः सत्त्वं वैशेषिकैरिष्यते तथा पृथिव्यादिद्रव्याणां रूपादिगुणानामुत्क्षेपणादिकर्मणां सामान्यविशेषसमवायानां च प्रागभावादीनामपीष्यत एव तथापि क्वचिदेव सत्त्वसमवायसिद्धौ नियमहेतुर्वक्तव्यः सत्सदितिज्ञानमबाधितं नियमहेतुरिति चेन्न । तस्य सामान्यादिष्वपि भावात् । यथैव हि द्रव्यं सत् गुणः सन् कर्म सदिति ज्ञानमबाधितमुत्पद्यते तथा सामान्यमस्ति विशेषोऽस्ति समवायोऽस्ति प्रागभावादयः सन्तीति ज्ञानमप्यबाधितमेव । सामान्यादिप्रागभावादिवस्तित्वं । अन्यथा तद्वादिभिः कथमभ्युपगम्यते । तत्रास्तित्वधर्मसद्भावादस्तीति ज्ञानं न पुनः सत्तासंबंधादनवस्थाप्रसंगात् ॥ सामान्यकल्पनात् । विशेषेषु च सामान्योपगमे सामान्यज्ञानात् विशेषानुपलंभादुभयतद्विशेषस्मरणाच्च कस्यचिदवश्यं भाविनि संशये तद्व्यवच्छेदार्थं विशेषांतरकल्पनानुषंगः । पुनस्तत्रापि सामान्यकल्पनेऽवश्यंभावी संशयः सति तस्मिंस्तद्व्यवच्छेदाय तद्विशेषांतरकल्पनायामनवस्थाप्रसंगात् । परापरविशेषसामान्यकल्पनमव्यानिवृत्ते सुदूरमपि गत्वा विशेषेषु सामान्यानभ्युपगमे सिद्धा सामान्यरहिता विशेषाः, समवाये च सामान्यस्यासंभवः प्रसिद्ध एव तस्यैकत्वात् सभवे चानवस्थानुषंगात् समवाये सामान्यस्य समवायांतरकल्पनादिति न सामान्यादिषु सदिति ज्ञानं सत्तानिबंधनं बाध्यमानत्वात् । तथा प्रागभावादिष्वपि सत्तासमवाये प्रागभावादित्वविरोधात् न सत्तानिबंधनमस्तीतिज्ञानं । ततोऽस्तित्वधर्मविशेषणसामर्थ्यादेव तत्रास्तीति ज्ञानमभ्युपगन्तव्यं । अन्यथाऽस्तीति व्यवहारायोगादिति केचिद्वैशेषिकाः समभ्यमंसत तांश्च परे प्रतिक्षिपंति । सामान्यादिषूपचरितसत्त्वाभ्युपगमात् मुख्यसत्त्वे बाधकसद्भावाच्च पारमार्थिकसत्त्वं, सत्तासंबंधादि वाऽस्तित्वधर्मविशेषणत्वादपि वाभाव्यते, सत्ताव्यतिरेकेणास्तित्वधर्मग्राहकप्रमाणाभावात् । अन्यथास्तित्व धर्मेष्वस्तीति प्रत्ययादस्तित्वांतरपरिकल्पनायामनवस्थानुषंगात् । तत्रोपचरितस्यास्तित्वस्य प्रतिज्ञाने सामान्यादिष्वपि तदुपचरितमस्तु मुख्ये बाधकसद्भावात् सर्वत्रोपचारस्य मुख्यबाधकसद्भावादेवोपपत्तेः । प्रागभावादिष्वपि मुख्यास्तित्वबाधकोपपत्तेरुपचारत एवास्तित्वव्यवहारसिद्धेरिति तेषां द्रव्यादिष्वपि सदितिज्ञानं सत्तानिबंधनं कुतः सिध्येत् तस्यापि बाधकसद्भावात् । तेषां स्वरूपतोऽसत्त्वे सत्त्वे वा सत्तासंबंधानुपपत्तेः । स्वरूपेणासत्सु द्रव्यादिषु सत्तासंबंधेऽतिप्रसंगस्य बाधकस्य प्रतिपादनात् । स्वरूपतः सत्सु सत्तासंबंधेऽनवस्था तस्य बाधकस्योपनिपातात् सत्ता संबंधेनापि सत्सु सत्त्वं पुनः सत्तासंबंधपरिकल्पनप्रसंगात् तस्य वैयर्थ्यात्, अपरिकल्पने स्वरूपतः सत्स्वपि तत एव सत्तासंबंधपरिकल्पनं माभूत्, स्वरूपतः सत्त्वाद्साधारण्यात् सत्सदित्यनुवृत्तिप्रत्ययस्यानुपपत्तेः । द्रव्यादिषु तन्निबंधनस्य साधारणसत्तासंबंधस्य परिकल्पनं न व्यर्थमिति चेन्न । स्वरूपसत्त्वादेव सदृशात्सदिति प्रत्ययस्योपपत्तेः । सदृशेतरे परिणामसामर्थ्यादेव द्रव्यादीनां साधारणासाधारणसत्त्वनिबंधनस्य सत्प्रत्ययस्य घटनात् । सर्वथाऽर्थान्तरभूतसत्तासंबंधसामर्थ्यात्सदिति प्रत्ययस्य साधारणस्यायोगात् । सत्तावद्द्रव्यं सत्तावान्गुणः सत्तावत्कर्मेति

सत्तासंबंधस्य प्रत्ययस्य प्रसंगात् ॥ न पुनः सद्द्रव्यं सन् गुणः सत्कर्मेति प्रत्ययःस्यात्। नहि घंटासंबंधाद्गवि घटेति ज्ञानमनुभूयते घंटावानिति ज्ञानस्य तत्र प्रतीतेः। यष्टिसंबंधात्पुरुषेयष्टिरिति प्रत्ययदर्शनात्तु सत्तासंबंधाद्द्रव्यादिषु सत्तेतिप्रत्ययःस्यात् अभेदे भेदोपचारात्। न पुनः सदिति प्रत्ययस्तथाप्योपचारात् द्रव्यादीनां सत्ताव्यपदेशो न पुनः परमार्थतः सिध्येत्। स्यान्मतं सत्तासामान्यवाचकस्यासत्ताशब्दस्येव सच्छब्दस्यापि सद्भावात्संबंधात्संति द्रव्यगुणकर्माणीति व्यपदिश्यंते भावस्य भाववदभिधायिनापि शब्देनाभिधानप्रसिद्धेः। विषाणी ककुद्मान् प्रांतेवालधिरिति गोत्वलिंगमित्यादिवत् विषाण्यादिवाचिना शब्देन विषाणित्वादेर्भावस्याभिधानादिति। तदप्यनुपपन्नं। तथोपचारादेव सत्प्रत्ययप्रसंगात्॥ पुरुषे यष्टिसंबंधाद्यष्टिरिति प्रत्ययवत्॥ यदि पुनर्यष्टिपुरुषयोः संयोगात्पुरुषो यष्टिरिति ज्ञानमुपचरितं युक्तं। न पुनर्द्रव्यादौ सदिति ज्ञानं तत्र सत्त्वस्य समवायादिति मतं तदऽवयवेष्ववयविनः समवायादवयविव्यपदेशःस्यात् न पुनरवयविव्यपदेशः। द्रव्ये च गुणस्य समवायाद्गुणव्यपदेशोऽस्तु क्रियासमवायात्क्रियाव्यपदेशस्तथा च न कदाचिदवयविप्ववयवप्रत्ययः गुणिनि गुणिप्रत्ययः क्रियावतिक्रियावत्प्रत्ययश्चोपपद्येतेति महान् व्याघातः पदार्थांतरभूतसत्तासमवायवादिनामनुषज्येत तदेवं स्वतः सत एवेश्वरस्य स्वसमवायोऽभ्युपगंतव्यः कथंचित्सदात्मतया परिणतस्यैव सत्त्वसमवायस्योपपत्तेः। अन्यथा प्रमाणेन बाधनात् स्वयं सतः सत्त्वसमवायेऽस्य च प्रमाणप्रसिद्धेः। स्वयं द्रव्यात्मना परिणतस्य द्रव्यत्वसमवायः। स्वयं ज्ञानात्मना परिणतस्य महेश्वरस्य ज्ञानसमवाय इति युक्तमुत्पश्यामः स्वयं नीलात्मनीलसमवायवत्॥ न हि कश्चिदतथापरिणतस्तथात्वसमवाय भागुपलभ्यतेऽतिप्रसंगात्। ततः प्रमाणबलान्महेश्वरस्य सत्त्वद्रव्यत्वात्मत्ववत् स्वयं ज्ञत्वप्रसिद्धे ज्ञानस्य समवायात् तस्य ज्ञत्वपरिकल्पनं न कंचिदर्थं पुष्णाति। ज्ञव्यवहारं पुष्णातीति चेन्न। ज्ञे प्रसिद्धे ज्ञव्यवहारस्यापि स्वतः प्रसिद्धेः। यस्य हि योऽर्थः प्रसिद्धः स तत्र तद्व्यवहारंप्रवर्तयन्नुपलब्धो यथा प्रसिद्धाकाशात्मा। आकाशे तद्व्यवहारप्रसिद्धे ज्ञश्च: कश्चित्तस्मात् ज्ञे तद्व्यवहारं प्रवर्तेयति। यदि तु प्रसिद्धेऽपि ज्ञे ज्ञत्वसमवायपरिकल्पनमज्ञव्यवच्छेदार्थमिष्यते तदाप्रसिद्धेऽप्याकाशेऽनाकाशव्यवच्छेदार्थमाकाशत्वसमवायपरिकल्पनमिष्यतां तस्यैकत्वादाकाशत्वासंभवात्स्वरूपनिश्चयादेवाकाशव्यवहारप्रवृत्तौ ज्ञेऽपीश्वरे स्वरूपनिश्चयादेव ज्ञव्यवहारोऽस्तु किं तत्र ज्ञानसमवायपरिकल्पनया ज्ञान परिणामपरिणतो हि ज्ञः प्रतिपादयितुं शक्यो नार्थांतरभूतः ज्ञानसमवायेन ततो ज्ञान समवायवानेवेह सिध्येत् न पुनर्ज्ञाता। नह्यर्थांतरभूते ज्ञाने समुत्पन्ने ज्ञाता, स्मरणे स्मर्ता, भोगे च भोक्तेति तत्प्रतीतिकं दर्शनं तदात्मना परिणतस्यैव तथाव्यपदेशप्रसिद्धेः। प्रतीतिबलाद्धि तत्त्वं व्यवस्थापयंतो यद्यथा निर्बाधं प्रतीतियंति तथैव व्यवहरंतीति प्रेक्षापूर्वकारिणः स्युर्नान्यथा। ततो महेश्वरोऽपि ज्ञाता व्यवहर्तव्यो ज्ञातृस्वरूपेण प्रमाणतः प्रतीयमानत्वात्। यद्येन स्वरूपेण प्रमाणतः प्रतीयमानं तत्तथा व्यवहर्तव्यं यथा सामान्यादिस्वरूपतया ज्ञातृस्वरूपेण प्रमाणतः प्रतीयमानश्च महेश्वरस्ततोज्ञातेति व्यवहर्तव्य इति। तदर्थमर्थांतरभूतज्ञानसमवायपरिकल्पनमनर्थकमेव तदेवं प्रमाण बलात्स्वार्थव्यवसायात्मके ज्ञाने प्रसिद्धे महेश्वरस्य ततो भेदैकांतनिराकरणे च कथंचित्स्वार्थव्यवसायात्मकज्ञानादभेदोऽभ्युपगंतव्यः कथंचित्तादात्म्यस्यैव समवायस्य व्यवस्थापनात्। तथाच नास्ति विवादो नार्थे जिनेश्वरस्यैव महेश्वर इति नामकरणात्कथंचित्स्वार्थव्यवसायात्मज्ञानं तादात्म्यमृच्छतः पुरुषविशेषस्य जिनेश्वरत्वनिश्चयात्। तथा च स एव हि मोक्षमार्गस्य प्रणेता व्यवतिष्ठते सदेहत्वे धर्मविशेषत्वे च सति सर्वविन्नष्टमोहत्वात् यस्तु न मोक्षमार्गस्य मुख्यः प्रणेता स न सदेहो यथा मुक्तात्मा धर्मविशेषभाग्वा यथाऽतत्कृत्केवली। नापि सर्वविन्नष्टमोहो यथा रथ्यापुरुषः। सदेहत्वे धर्मविशेषत्वे च सति सर्वविन्नष्टमोहश्च जिनेश्वरस्तस्मान्मोक्षमार्गस्य प्रणेता व्यवतिष्ठत एव स्वार्थव्यवसायात्मकज्ञानात्। सर्वथाऽर्थांतरभूतस्तु शिवः सदेहो निर्देहो वा न मोक्षमार्गोपदेशस्य कर्ता युज्यते कर्मभूभृतामभेत्तृत्वात्। यो यः कर्मभूभृतामभेत्ता स स न सर्वविन्नष्टमोहो यथा ऽऽकाशादिरभव्यो-

वा संसारी चात्मा, कर्मभूभृतामभेत्ता च शिवः परैरुपेयते तस्मान्न सर्वविप्रकृष्टमोह इति साक्षान्मोक्षमार्गोपदेशस्य कर्ता न भवेत् निरस्तश्च पूर्वं विस्तरतस्तस्यानादिकर्मभिरस्पृष्टस्य पुरुषविशेषस्येश्वरस्य विस्तरेण प्रागुक्तस्यैवात्रोपसंहारात् । यथा चेश्वरस्य मोक्षमार्गोपदेशित्वं न प्रतिष्ठामियर्ति तथा कपिलस्यापीत्यतिदिश्यते ।

एतेनैव प्रतिव्यूढः कपिलोऽप्युपदेशकः ।
ज्ञानादर्थांतरत्वस्याऽविशेषात्सर्वथा स्वतः ॥ ७७ ॥
ज्ञानसंसर्गतो ज्ञत्वमज्ञस्यापि न तत्त्वतः ।
व्योमवच्चेतनस्यापि नोपपद्येत मुक्तवत् ॥ ७८ ॥

कपिल एव मोक्षमार्गस्योपदेशकः क्लेशकर्मविपाकाशयानां भेत्ता रजस्तमसोस्तिरस्करणात् । समस्ततत्त्वज्ञानवैराग्यसंपन्नो धर्मविशेषैश्वर्ययोगी च प्रकृष्टसत्त्वस्याविर्भावात् विशिष्टदेहत्वाच्च । न पुनरीश्वरः, तस्याकाशस्येवाऽशरीरस्य ज्ञानेच्छाक्रियाशक्त्यसंभवात् मुक्तात्मवत् । सदेहस्यापि सदा क्लेशकर्मविपाकाशयैरपरामृष्टत्वविरोधात् । धर्मविशेषसद्भावे च तस्य तत्साधनसमाधिविशेषस्यावश्यंभावात् तन्निमित्तस्यापि ध्यानधारणाप्रत्याहारप्राणायामासनयमनियमलक्षणस्य योगांगस्याभ्युपगमनीयत्वात् । अन्यथा समाधिविशेषासिद्धेर्धर्मविशेषानुत्पत्तेर्ज्ञानाद्यतिशयलक्षणैश्वर्यायोगादनीश्वरत्वप्रसंगात् । सत्त्वप्रकर्षयोगित्वे च कस्यचित्सदामुक्तस्यानुपायसिद्धस्य साधकप्रमाणाभावादिति निरीश्वरसांख्यवादिनः प्रचक्षते । तेषां कपिलोऽपि तीर्थकरत्वेनाभिमतः प्रकृतेनैवेश्वरस्य मोक्षमार्गोपदेशित्वनिराकरणेनैव प्रतिव्यूढः प्रतिपत्तव्यः स्वतस्तस्यापि ज्ञानादर्थांतरत्वाविशेषात्सर्वज्ञत्वायोगात् सर्वार्थज्ञानसंसर्गात्तस्य सर्वज्ञत्वपरिकल्पनमपि न युक्तमाकाशादेरपि सर्वज्ञत्वप्रसंगात् । तथाविधज्ञानपरिणामाश्रयप्रधानसंसर्गस्याविशेषात् । तद्विशेषेऽपि कपिल एव सर्वज्ञश्चेतनत्वान्न पुनराकाशादिरित्यपि न युक्तं । तेषां (कपिलानां मते) मुक्तात्मनश्चेतनत्वेऽपि ज्ञानसंसर्गतः सर्वज्ञत्वानभ्युपगमात् । सबीजसमाधिसंप्रज्ञातयोगकालेऽपि सर्वज्ञत्वविरोधात् । स्यान्मतं, न मुक्तस्य ज्ञानसंसर्गः संभवति तस्य संप्रज्ञातयोगकाले एव विनाशात् । "तदा द्रष्टुः (पुरुषस्य) स्वरूपेऽवस्थानमिति" वचनात् । मुक्तस्य तु संस्कारविशेषस्यापि विनाशात् । असंप्रज्ञातस्यैव संस्कारविशेषतावचनात् । चरिताथेन ज्ञानादिपरिणामशून्येन प्रधानेन संसर्गमात्रेऽपि तन्मुक्तात्मानं प्रति तस्य नष्टत्वात् । संसार्यात्मानमेव प्रत्यनष्टत्ववचनात् न कपिलस्य चेतनस्य स्वरूपस्य ज्ञानसंसर्गोऽसर्वज्ञत्वाभावसाधने मुक्तात्मोदाहरणं तत्र ज्ञानसंसर्गस्यासंभवादिति । तदप्यसारं । प्रधानस्य सर्वगतस्यानंतस्य संसर्गविशेषानुपपत्तेः । कपिलेन सह तस्य संसर्गे सर्वात्मना संसर्गप्रसंगात् । कस्यचिन्मुक्तिविरोधान्मुक्तात्मनो वा प्रधानेनासंसर्गे कपिलस्यापि तेनासंसर्गप्रसक्तेः । अन्यथा विरुद्धधर्माध्यासात्प्रधानभेदोपपत्तेः । ननु च प्रधानमेकं निरवयवं सर्वगतं न केनचिदात्मना संसृष्टमपरेणासंसृष्टमिति विरुद्धधर्माऽध्यासीष्यते येन तद्भेदापत्तिः । किं तर्हि ? सर्वदा सर्वात्मसंसर्गि केवलं मुक्तात्मानं प्रतिनष्टमपीतरात्मानं प्रत्यनष्ट निवृत्ताधिकारत्वात् प्रवृत्ताधिकारत्वाच्चेति येन विरुद्धधर्माध्यासस्य तदवस्थत्वात् । प्रधानस्यैकस्य निवृत्तेतरक्रमेण निवृत्ताधिकारित्वप्रवृत्ताधिकारत्वयोर्युगपद्विधिकरणयुक्तं नष्टत्वानष्टत्वयोरिव विरोधात् । विषयभेदान्न तयोर्विरोधः कश्चित्कचित् पितृत्वपुत्रत्वधर्मवत् तयोरेकविषययोरेव विरोधात् । निवृत्ताधिकारत्वं हि मुक्तपुरुषविषयं प्रवृत्ताधिकारत्वं पुनरमुक्तपुरुषविषयमिति । भिन्नपुरुषापेक्षया भिन्नविषयत्वं । नष्टत्वानष्टत्वधर्मयोरपि मुक्तात्मानमेव प्रति विरोधः स्यादमुक्तात्मानं प्रत्येव वा । न चैवं मुक्तात्मापेक्षया प्रधानस्य नष्टधर्मत्ववचनात् अमुक्तापेक्षया चानष्टत्वप्रतिज्ञानादिति कश्चित्सोऽपि न विरुद्धधर्माध्यासान्मुच्यते प्रधानस्यैकरूपत्वात् येनैव हि रूपेण प्रधानं मुक्तात्मानं प्रतिचरिताधिकारं नष्टं च

प्रतिज्ञायते तेनैवानवसिताधिकारमनष्टमसुक्तात्मानं प्रतीति कथं न विरोधः प्रसिध्येत्। यदि पुना-रूपांतरेण तथेष्यते तदा न प्रधानमेकरूपं स्यात् रूपद्वयस्य सिद्धेः। तथाचैकमनेकरूपं प्रधानं सिध्येत् सर्वमनेकांतात्मकं वस्तु साधयेत्। स्यादाकूतं न परमार्थतः प्रधानं विरुद्धयोर्धर्मयोरधिकरणं तयोः शब्दज्ञानानुपातिना वस्तुशून्येन विकल्पेनाध्यारोपितत्वादपारमार्थिकत्वे धर्मयोरपि धर्मांतरपरिकल्प-नायामनवस्थानात्। सुदूरमपि गत्वा कस्यचिदारोपितधर्माभ्युपगमे प्रधानस्याप्यारोपितावेव नष्टत्वा-नष्टत्वधर्मौ स्यातामवसितानवसिताधिकारत्वधर्मौ च तदपेक्षानिमित्तं स्वरूपद्वयं च ततोनैकमनेकरूपं प्रधानं सिध्येत्। यतः सर्वं वस्त्वेकानेकात्मकं साधयेदिति। तदपि न विचारसहं। मुक्तामुक्तत्वयो-रपि पुंसामपारमार्थिकत्वप्रसंगात्। सत्यमेवत्। न तत्त्वतः पुरुषस्य मुक्तत्वं संसारित्वं वा धर्मोऽस्ति प्रधानस्यैव संसारित्वप्रसिद्धेः। तस्यैव च मुक्तिकारणतत्त्वज्ञानवैराग्यपरिणामान्मुक्तित्वोपपत्तेः। तदेवं मुक्तेः पूर्वं निःश्रेयसमार्गस्योपदेशकं प्रधानमिति परमतमनूद्य दूषयन्नाह।

प्रधानं ज्ञत्वतो मोक्षमार्गस्याऽस्तूपदेशकं।
तस्यैव विश्ववेदित्वाद्भेतृत्वात्कर्मभूभृतां॥ ७९॥
इत्यसंभाव्यमेवास्याऽचेतनत्वात्पटादिवत्।
तदसंभवतोनूनमन्यथानिष्फलः पुमान्॥ ८०॥
भोक्ताऽऽत्मा चेत्स एवास्तु कर्ता तदविरोधतः।
विरोधे तु तयोर्भोक्तुः स्याद्भुजौ कर्तृता कथं॥ ८१॥
प्रधानं मोक्षमार्गस्य प्रणेतृ स्तूयते पुमान्।
मुमुक्षुभिरितिब्रूयात्कोऽन्योऽकिंचित्करात्मनः॥ ८२॥

प्रधानमेवास्तु मोक्षमार्गस्योपदेशकं ज्ञत्वात्। यन्तु न मोक्षमार्गस्योपदेशकः स न ज्ञो दृष्टो यथा घटादिः मुक्तात्माच, ज्ञं च प्रधानं तस्मान्मोक्षमार्गस्योपदेशकं। न च कपिलादिपुरुषसंसर्गभाजः प्रधानस्य ज्ञत्वमसिद्धं विश्ववेदित्वात्। यस्तु न ज्ञः स न विश्ववेदी यथा घटादिः। विश्ववेदि च प्रधानं ततो ज्ञमेव च विश्ववेदि च तदसिद्धं सकलकर्मभूभृद्भेतृत्वात्। तथा हि—कपिलात्मना संसृष्टं प्रधानं विश्ववेदि कर्मराशिविनाशित्वात्। यत्तु न विश्ववेदि तन्न कर्मराशिविनाशीष्टं दृष्टं वा यथा व्योमादि। कर्मराशिविनाशि च प्रधानं तस्माद्विश्ववेदि। न वाऽस्य कर्मराशिविनाशित्वमसिद्धं रजस्तमोविवर्ताशुद्धकर्मनिकरस्य संप्रज्ञातयोगबलात्प्रध्वंससिद्धेः सत्त्वप्रकर्षाच्च संप्रज्ञातयोगघटनात्। तत्र सर्वज्ञवादिनां विवादाभावात् इति सांख्यानां दर्शनं। तदप्यसंभाव्यमेव। स्वयमेव प्रधानस्याचेत-नत्वाभ्युपगमात्। तथा हि न प्रधानं कर्मराशिविनाशि स्वयमचेतनत्वात्। यत्स्वयमचेतनं तन्न कर्म-राशिविनाशि दृष्टं यथा वस्त्रादि। स्वयमचेतनं च प्रधानं तस्मान्न कर्मराशिविनाशि। चेतनसंसर्गा-त्प्रधानस्य चेतनत्वोपगमादसिद्धसाधनमिति चेन्न। स्वयमिति विशेषणात्। स्वयं हि प्रधानमचेतनमेव चेतनसंसर्गात्तूपचारादेव तच्चेतनमुच्यते स्वरूपतः पुरुषस्यैव चेतनत्वोपगमात् "चैतन्यं पुरुषस्य स्व-रूपमिति" वचनात्। ततः सिद्धमेवेदं साधनं कर्मराशिविनाशित्वाभावं साधयति तस्माच्च विश्ववेदि-त्वाभावः कर्मराशिविनाशित्वाभावे कस्यचिद्विश्ववेदित्वविरोधात्। ततश्च न प्रधानस्य ज्ञत्वं स्वयमचे-तनस्य ज्ञत्वानुपलब्धेः। नचाज्ञस्य मोक्षमार्गस्योपदेशकत्वं संभाव्यत इति। प्रधानस्य सर्वमसंभाव्य-मेव स्वयमचेतनस्य संप्रज्ञातसमाधेरपि दुर्घटत्वात्। बुद्धिसत्त्वप्रकर्षस्यासंभवाद्रजस्तमोमलावरण-विगमस्यापि दुरुपपादत्वात्। यदि पुनरचेतनस्यापि प्रधानस्य विपर्ययाद्बंधसिद्धेः संसारित्वं तत्त्व-

ज्ञानात्कर्ममलावरणविगमे सति समाधिविशेषाद्विवेकख्यातेः सर्वज्ञत्वं मोक्षमार्गोपदेशित्वं जीवन्मुक्तदशायां विवेकख्यातेरपि निरोधे निर्बीजसमाधेर्मुक्तत्वमिति कापिला मन्यन्ते तदाऽयं पुरुषः परिकल्प्यमानो निष्फल एव स्यात् प्रधानेनैव संसारमोक्षतत्कारणपरिणामधारणपर्याप्तत्वात्। ननु च सिद्धेऽपि प्रधाने संसारादिपरिणामानां कर्तरि भोग्ये, भोक्ता पुरुषः कल्पनीय एव भोग्यस्य भोक्तारमन्तरेणानुपपत्तेरिति न मन्तव्यं। तस्यैव भोक्तुरात्मनः कर्तृत्वसिद्धेः प्रधानस्य कर्तुः परिकल्पमानर्थक्यात्। नहि कर्तृत्वभोक्तृत्वयोः कश्चिद्विरोधोऽस्ति भोक्तृभुजिक्रियायामपि कर्तृत्वविरोधानुषंगात्। तथा च कर्तरि भोक्तृत्वानुपपत्तेर्भोक्तेति न व्यपदिश्येत। स्यान्मतं भोक्तेति कर्तरि शब्दप्रयोगात्पुरुषस्य न वास्तवं कर्तृत्वं शब्दज्ञानानुपातिनः कर्तृत्वविकल्पस्य वस्तुशून्यत्वादिति। तदप्यसंबद्धं। भोक्तृत्वविधर्मणामपि पुरुषस्यावास्तवत्वापत्तेः। तथोपगमाच्चेतयत इति वचनं पुरुषो न वस्तुतः सिद्ध्येत्। चेतनशब्दज्ञानानुपातिनो विकल्पस्य वस्तुशून्यत्वात् कर्तृत्वभोक्तृत्वादिसकलशब्दज्ञानानुपातिविकल्पवत्। सकलशब्दविकल्पगोचरातिक्रान्तत्वादिति चेत्ः पुरुषस्यावक्तव्यत्वमिति चेन्न। तस्यावक्तव्यशब्देनापि वचनविरोधात्। तथाप्यवचने कथं परप्रत्यायनमिति संप्रधार्यं कायप्रवृत्तेरपि शब्दादिविषयत्वेन प्रवृत्तस्य योगात्। स्वयं च तथाविधं पुरुषं सकलवाग्गोचरातीतमकिंचित्करं कुतः प्रतिपद्येत। स्वसंवेदनादिति चेन्न। तस्य ज्ञानशून्ये पुरुषे संभवात् स्वरूपस्य च स्वयं संचेतनायां पुरुषेण प्रतिज्ञायमानायां बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते इति व्याहन्यते स्वरूपस्य बुद्ध्यनध्यवसितस्यापि तेन संवेदनात्। यथा च बुद्ध्यनध्यवसितमात्मानमात्मा संचेतयते तथा बाह्यमर्थमपि संचेतयतां किमनया बुद्ध्या निष्कारणमुपकल्पितया। स्वार्थसंवेदकेन पुरुषेण तत्कृत्यस्य कृतत्वात्। यदि पुनरर्थसंवेदनस्य कादाचित्कत्वाद्बुद्ध्यध्यवसायस्तत्रापेक्ष्यते तस्य सकारणबुद्धिकादाचित्कतया कादाचित्कस्यार्थसंवेदनस्य कादाचित्कतोपपत्तिसिद्धेः। बुद्ध्यध्यवसायानपेक्षायां पुंसोऽर्थसंवेदने शश्वदर्थसंवेदनप्रसंगादिति मन्यध्वं तदार्थसंवेदिनः पुरुषस्यापि संचेतना कादाचित्का किमपेक्षा स्यात्. अर्थसंवेदनापेक्षेति चेत् किमिदानीमर्थसंवेदनं पुरुषादन्यदभिधीयते? तथाभिधाने स्वरूपसंवेदनमपि पुंसोऽन्यत्स्यात्त तस्य कादाचित्कतया शाश्वतिकत्वाभावात् तादृशस्वरूपसंवेदनादात्मनोऽनन्यत्व ज्ञानादेवानन्यत्वमभ्यस्तां। ज्ञानस्यानित्यत्वात् ततोऽनन्यत्वे पुरुषस्यानित्यत्वप्रसंग इति चेत्। स्वरूपसंवेदनादप्यनित्यादात्मनोऽनन्यत्वे कथंचिदनित्यत्वप्रसंगो दुःपरिहार एव। स्वरूपसंवेदनस्य नित्यत्वेऽर्थसंवेदनस्यापि नित्यता स्यादेव पदार्थपक्षात् तस्यानित्यत्वे स्वरूपसंवेदनस्याप्यनित्यत्वमस्तु न चात्मनः कथंचिदनित्यत्वमयुक्तं। सर्वथा नित्यत्वे प्रमाणविरोधात् सोयं सांख्यः पुरुषं कादाचित्कार्थसंचेतनात्मकमपि निरतिशयं नित्यमापक्षाणो ज्ञानात्कादाचित्कादनन्यत्वमनित्यत्वभयान्न प्रतिपद्यत इति किमपि महाद्भुतं। प्रधानस्य चानित्यस्याव्यक्तनर्मेश्वरभूतस्य नित्यतां प्रतीयन् पुरुषस्यापि ज्ञानादनन्यत्वापन्नधीश्वरभूतस्य नित्यत्वमुपैतु सर्वथा विशेषाभावात्. केवलं ज्ञानपरिणामाश्रयस्य प्रधानस्यादृष्टस्यापि परिकल्पनायां ज्ञानात्मकस्य च पुरुषस्य स्वार्थव्यवसायिनो दृष्टस्य हानिः पापीयसी स्यात्। दृष्टहानिरदृष्टपरिकल्पना च पापीयसीति सकलप्रेक्षावतामभ्युपगमनीयत्वात्। ततस्तां परिजिहीर्षता पुरुष एव ज्ञानदर्शनोपयोगलक्षणः कश्चित्क्षीणकर्मा सकलतत्त्वसाक्षात्कारी मोक्षमार्गस्य प्रणेता पुण्यशरीरः पुण्यातिशयोदये सति साभिहितोक्तपरिग्राहकविनेयमुख्यैः प्रतिपत्तव्यस्तस्यैव मुमुक्षुभिः प्रेक्षावद्भिः स्तुत्यतोपपत्तेः। प्रधानं तु मोक्षमार्गस्य प्रणेतृ ततोऽधीश्वरभूत एवात्मा मुमुक्षुभिः स्तूयते इत्यकिंचित्करात्मवादेन मृषाम ततोऽन्य इसक प्रसंगेन। योऽप्याह मामूकपिलो निर्वाणस्य प्रणेता महेश्वरवत् तस्य विचार्यमाणस्य तथा व्यवस्थापयितुमशक्तेः. सुगतस्तु निर्वाणमार्गोपदेशकोऽस्तु सकलबाधकप्रमाणाभावादिति तमपि निराकर्तुमुपक्रमते॥

सुगतोऽपि न निर्वाणमार्गस्य प्रतिपादकः ।
विश्वतत्त्वज्ञतापायात्तत्त्वतः कपिलादिवत् ॥ ७४ ॥

योयस्तत्वतो विश्वतत्त्वज्ञताऽपेतः स स न निर्वाणमार्गस्य प्रतिपादको यथाकपिलादिस्तथा च सुगत इत्येवं नासिद्धं साधनं तत्त्वतो विश्वतत्त्वज्ञतापेतत्वस्य सुगते धर्मिणि सद्भावात् । स हि विश्वतत्त्वान्यतीतानागतवर्तमानानि साक्षात्कुर्वंस्तद्धेतुकोऽभ्युपगंतव्यः तेषां सुगतज्ञानहेतुत्वाभावे सुगतज्ञान विषयत्वविरोधात् । नाकारणं विषय इति स्वयमभिधानात् । तथाऽतीतानां तत्कारणत्वेऽपि न वर्तमानानामर्थानां सुगतज्ञानकारणत्वं समसमयभाविनां कार्यकारणभावाभावादन्वयव्यतिरेकानुविधानायोग.त् । नह्यननुकृतान्वयव्यतिरेकोऽर्थः कस्यचित्कारणमिति युक्तं वक्तुं । नाननुकृतान्वयव्यतिरेकं कारणमिति प्रतीतेः । तथा भविष्यतां चार्थानां न सुगतज्ञानकरणता युक्ता यतस्तद्विषयं सुगतज्ञानं स्यादिति विश्वतत्त्वज्ञतापेतत्वं सुगतस्य सिद्धमेव तथा परमार्थतः स्वरूपमात्रावलंबित्वात् सर्वविज्ञानानां सुगतज्ञानस्यापि स्वरूपमात्रविषयत्वमेवोररीकर्तव्यं तस्य वहिरर्थविषयत्वे स्वार्थसंवेदकत्वात् सर्वचित्तचैत्तानामात्मसंवेदनं प्रत्यक्षमिति वचनं विरोधमध्यासीत । वहिरर्थाकारतयोत्पद्यमानत्वात् सुगतज्ञानस्य वहिरर्थविषयत्वोपचारकल्पनायां न परमार्थतो वहिरर्थविषयं सुगतज्ञानमतस्तत्त्वत इति विशेषणमपि नासिद्धं साधनस्य । नापि विरुद्धं विपक्षएव वृत्तेरभावात् कपिलादौ सपक्षेऽपि सद्भावात् । ननु तत्त्वतोविश्वतत्त्वज्ञतापेतेन मोक्षमार्गस्य प्रतिपादकेन दिग्नागाचार्यादिना साधनस्य व्यभिचार इति चेन्न । तस्यापि पक्षीकृतत्वात् । सुगतग्रहणेन सुगतमतानुसारिणां सर्वेषां गृहीतत्वात् । तर्हि स्याद्वादिनाऽनुत्पन्नकेवलज्ञानेन तत्त्वतो विश्वतत्त्वज्ञतापेतेन सूत्रकारादिना निर्वाणमार्गस्योपदेशकेनानैकांतिकं साधनमिति चेन्न । तस्यापि सर्वज्ञप्रतिपादितनिर्वाणमार्गोपदेशित्वेन तदनुवादकत्वात् प्रतिपादकत्वसिद्धेः। साक्षात्तत्त्वतो विश्वतत्त्वज्ञ एव हि निर्वाणमार्गस्य प्रवक्ता, गणधरदेवादयस्तु सूत्रकारपर्यंतास्तदनुवक्तारएव गुरुपर्वक्रमाविच्छेदादिति स्याद्वादिनां दर्शनं ततो न तैरनेकांतिको हेतुर्यतः सुगतस्य निर्वाणमार्गस्योपदेशित्वाभावं न साधयेत् । स्यान्मतं न सुगतज्ञानं विश्वतत्त्वेभ्यः समुत्पन्नं तदाकारतां चापन्नं तदध्यवसायि च तत्साक्षात्कारि सौगतैरभिधीयते । "भिन्नकालं कथं ग्राह्यमितिचेद्ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षम" मित्यनेन तदुत्पत्तिताद्रूप्ययोर्ग्राह्यत्वलक्षणत्वेन व्यवहारिणः प्रत्यभिधानात् "यत्रैव जनयेदेनां तत्रैवास्य प्रमाणते" त्यनेनच तदध्यवसायित्वस्य प्रत्यक्षलक्षणत्वेन वचनमपि न सुगतप्रत्यक्षापेक्षया व्यवहारजनापेक्षयैव तस्य व्याख्यानात् सुगतप्रत्यक्षे स्वसंवेदनप्रत्यक्ष इव तल्लक्षणस्यासंभवात् । यथैव हि स्वसंवेदनप्रत्यक्षं स्वस्मादनुत्पद्यमानमपि स्वाकारमननुकुर्वाणं स्वस्मिन् व्यवसायमजनयत् प्रत्यक्षमिष्यते कल्पनापो[१]ढाभ्रांतत्वलक्षणसद्भावात् तथा योगिप्रत्यक्षमपि वर्तमानातीतानागततत्त्वेभ्यः स्वयमनुत्पद्यमानं तदाकारमननुकुर्वत् तदव्यवसायमजनयत् प्रत्यक्षं तल्लक्षणयोगित्वात्प्रतिपद्यते। कथमन्यथा सकलार्थविषयं विधूतकल्पनाजालं च सुगतप्रत्यक्षं सिद्ध्येत् तस्य भावनाप्रकर्षपर्यंतजत्वाच्च । न समस्तार्थजत्वं युक्तं 'भावना प्रकर्षपर्यंतजं च योगिज्ञान' मिति वचनात् । भावना हि द्विविधा श्रुतमयी चिंतामयी च । तत्र श्रुतमयी श्रूयमाणेभ्यः परार्थानुमानवाक्येभ्यः समुत्पद्यमानेन श्रुतशब्दवाच्यतामास्कंदता निर्वृत्ता, परं प्रकर्षं प्रतिपद्यमाना स्वार्थानुमानलक्षणया [१]चिंतया निर्वृत्तां चिंतामयीं भावनामारभते सा च प्रकृष्यमाणा परं प्रकर्षपर्यंतं संप्राप्ता योगिप्रत्यक्षं जनयति ततस्तत्वतो विश्वतत्वज्ञतासिद्धेः सुगतस्य न तदपेतत्वं सिद्ध्यति यतो निर्वाणमार्गस्य प्रतिपादकः सुगतो न भवेदिति । तदपि न विचारक्षमं । भावनाया विकल्पात्मिकायाः श्रुतमय्याश्चिंतामय्याश्चावस्तुविषयाया वस्तुविषयस्य योगिज्ञानस्य जन्मविरोधात् कुतश्चिदतत्त्व

१ चित्ताना समूह॰ सततिरितियावत् । २ निर्विकल्पवुद्धिः ।

विषयादविकल्पज्ञानादसत्यविषयस्य ज्ञानस्यानुपपत्तेः । कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुतज्ञानेभ्य कामिनीमृतेष्टजनशत्रुसंघातनियतार्थगोचराणां पुरतोऽवस्थितानामिव दर्शनस्याप्यभूतार्थविषयतया तत्त्वविषयत्वाभावात् । तथा चाभ्यधायि " कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः । अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव" इति ॥ ननु च कामादिभावनाज्ञानादभूतानामपि कामिन्यादीनां पुरतोऽवस्थितानामिव स्पष्टं साक्षाद्दर्शनमुपलभ्यते किमङ्ग पुनः श्रुतानुमानभावनाज्ञानात्परमप्रकर्षप्राप्ताच्चतुरार्यसत्यानां परमार्थसतां दुःखसमुदयनिरोधमार्गाणां योगिनः साक्षाद्दर्शनं न भवतीत्ययमर्थोऽस्य श्लोकस्य सौगतैर्विवक्षितः । स्पष्टज्ञानस्य भावनाप्रकर्षोत्पत्तौ कामिन्यादिषु भावनाप्रकर्षस्य तद्विषयस्पष्टज्ञानजनकस्य दृष्टांततया प्रतिपादनात् । न च श्रुतानुमानभावना ज्ञानमतत्त्वविषयं तदालंबनस्य प्राप्यत्वात् । श्रुतं हि परार्थानुमानं त्रिरूपलिंगप्रकाशकं वचनं चिंता च स्वार्थानुमानं साध्याविनाभावि त्रिरूपलिंगज्ञानं तस्य विषयो द्वेधा प्राप्यश्चालंबनीयश्च तत्रालंब्यमानस्य साध्यसामान्यस्य सादृश्यसावस्तुत्वादवस्तुविषयत्वेऽपि प्राप्यस्वलक्षणापेक्षया तत्त्वविषयत्वं व्यवस्थाप्यते वस्तुविषयं प्रामाण्यं द्वयोरपि प्रत्यक्षानुमानयोरिति वचनात् । यथैव हि प्रत्यक्षादर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां न विसंवाद्यत इत्यर्थक्रियाकारि स्वलक्षणवस्तुविषयं प्रत्यक्षं प्रतीयते तथा परार्थानुमानात्स्वार्थानुमानाच्चार्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां न विसंवाद्यत इत्यर्थक्रियाकारि चतुरार्यसत्यवस्तुविषयमनुमानमास्थीयत इत्युभयोः प्राप्यवस्तुविषयं प्रामाण्यं सिद्धं प्रत्यक्षस्येवानुमानस्यार्थासंभवे संभवाभावसाधनात् । तदुक्तं । "अर्थस्यासंभवेऽभावात्प्रत्यक्षेऽपि प्रमाणता । प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम्" मिति ॥ तदेवं श्रुतानुमानभावनाज्ञानात्प्रकर्षपर्यंतप्राप्ताच्चतुरार्यसत्यज्ञानस्य स्पष्टतमस्योत्पत्तेरविरोधात् । सुगतस्य विश्वतत्त्वज्ञता प्रसिद्धैव परमवैतृष्ण्यवत् । संपूर्णं गतः सुगत इति निर्वचनात् सुकलशवत् । सुशब्दस्य संपूर्णार्थत्वात् संपूर्णं हि साक्षाच्चतुरार्यसत्यज्ञानं संप्राप्तः सुगत इष्यते । तथा शोभनं गतः सुगत इति सुशब्दस्य शोभनार्थत्वात् सुरूपकन्यावत् निरुच्यते । शोभनो ह्यविद्यातृष्णाशून्यो ज्ञानसंतानस्तस्याशोभनाभ्यामविद्यातृष्णाभ्यां व्यावृत्तत्वात्प्राप्तः सुगत इति निरास्रवचित्तसंतानस्य सुगतत्ववर्णनात् । तथा सुष्ठु गतः सुगत इति पुनरनावृत्त्यागत इत्युच्यते । सुशब्दस्य पुनरनावृत्त्यर्थत्वात् सुनष्टज्वरवत् । पुनरविद्यातृष्णाकलंकितचित्तसंतानावृत्तेरभावात् निरास्रवचित्तसंतानसद्भावात् " विश्वस्यैव पराधीना येषां तु महती कृपेति " वचनात् ॥ कृपा हि त्रिविधा सत्त्वालंबना पुत्रकलत्रादिषु । धर्मालंबना सभादिषु । निरालंबना सपुटसंपुष्टमधूकोदरणादिषु । तत्र महती निरालंबना कृपा सुगतानां सत्त्वधर्मानपेक्षत्वादिति ते तिष्ठंत्येव न कदाचिन्निर्वांति धर्मदेशनया जगदुपकारनिरतत्वाज्जगदवसानत्वात् 'बुद्धो भवेयं जगतो हिताय' इति भावनया बुद्धस्य संवर्तकस्य धर्मविशेषस्योत्पत्तेर्धर्मदेशनाविरोधाभावाद्विवक्षामंतरेणापि विधूतकल्पनाजालस्य बुद्धस्य मोक्षमार्गोपदेशिन्या वाचो धर्मविशेषादेव प्रवृत्तेः स एव निर्वाणमार्गस्य प्रतिपादकः समवतिष्ठते विश्वतत्त्वज्ञत्वात् कार्त्स्न्येन वितृष्णत्वाच्चेति । केचिदाचक्षते सौत्रांतिकमतानुसारिणः सौगतास्तेषां तदभ्युपगममेव न संभावयामः । किं पुनर्विश्वतत्त्वज्ञः सुगतः स च निर्वाणमार्गस्य प्रतिपादक इत्यसंभाव्यमानं प्रमाणविरुद्धं प्रतिपद्येमहि । तथाहि प्रतिक्षणविनश्वरा बहिरर्थाः परमाणवः प्रत्यक्षतो न अनुभूता नानुभूयंते स्थिरस्थूलसाधारणाकारस्य प्रत्यक्षबुद्धौ घटादेरर्थस्य प्रतिभासनात् यदि पुनरन्योन्यमसंसृष्टरूपाः परमाणवः प्रत्यक्षबुद्धौ प्रतिभासंते प्रत्यक्षपृष्ठभाविनी तु कल्पना संवृतिः स्थिरस्थूलसाधारणाकारमसंतमपि विद्यमानमारोपयतीति सांवृतार्थमनाः एव विज्ञानकाया इति निगद्यते । तदा निरंशानां क्षणिकपरमाणूनां का नामाऽन्यासत्तेति विचार्यं । व्यवधानाभाव इति चेत् तर्हि सजातीयस्य विजातीयस्य च व्यवधायकस्याभावात्तेषां व्यवधानाभावः संसर्गः प्रोक्तः स्यात् स च सर्वात्मना न संभवत्येकपरमाणुमात्रप्रचयप्रसंगात् ।

---

१ रूपं, वेदना, विज्ञान, संज्ञा संस्कार इति दुःखं. दुःख दुःखम्, क्षणिक क्षणिकम्, शून्यं शून्यम् । इति चतुरार्यसत्यानाम् ।

नाप्येकदेशेन दिग्भागभेदेन षड्भिः परमाणुभिरेकस्य परमाणोः संसृज्यमानस्य षडंशतापत्तेः ततएवा संसृष्टाः परमाणवः प्रत्यक्षेणालंक्ष्यंत इति चेन कथमत्यासन्नास्ते विरोधादविप्रदेशव्यवधानाभावात्प्रत्यासन्नास्त इति चेन्न। समीपदेशव्यवधानोपगमप्रसंगात्। तथा च समीपदेशव्यवधायकं वस्तु व्यवधीयमानपरमाणुभ्यां संसृष्टं व्यवहितं वा स्यात गत्यंतराभावात्। न तावत्संसृष्टं तत्संसर्गस्य सर्वात्मनैकदेशेन वा विरोधात्। नापि व्यवहितं व्यवधायकांतरपरिकल्पनानुषंगात् व्यवधायकांतरमपि व्यवधीयमानाभ्यां संसृष्टं व्यवहितं चेति पुनः पर्यनुयोगेऽनवस्थानादिति कात्यासन्नाऽसंसृष्टरूपाः परमाणवो बहिः संभवेयुः। ये प्रत्यक्षविषयाः स्युस्तेषां प्रत्यक्षाविषयत्वे न कार्यलिंगं स्वभावलिंगं वा परमाण्वात्मकं प्रत्यक्षतः सिध्येत परमाण्वात्मकमाध्यवत् क्वचित्तदसिद्धौ च न कार्यकारणयोर्व्याप्यव्यापकयोर्वा तद्भावः सिध्येत् प्रत्यक्षानुपलंभव्यतिरेकेण तत्साधनासंभवात् तदसिद्धौ च न स्वार्थानुमानमुदियात्। तस्य लिंगदर्शनसंबंधस्मरणाभ्यामेवोदयप्रसिद्धेः। तदभावे तदनुपपत्तेः। स्वार्थानुमानानुपपत्तौ च न परार्थानुमानरूपं श्रुतमिति क्व श्रुतमयी चिंतामयी च भावना स्यात् यतस्तत्प्रकर्षपर्यंतजं योगिप्रत्यक्षमुररीक्रियते ततो न विश्वतत्त्वज्ञता सुगतस्य तत्त्वतोऽस्ति येन संपूर्णं गतः सुगतः शोभनं गतः सुगतः सुष्ठु गत इति सुशब्दस्य संपूर्णाद्यर्थत्रयमुदाहृत्य सुगतशब्दस्य निर्वचनत्रयमुपवर्ण्यते। सकलाविद्यातृष्णाप्रहाणाच्च सर्वार्थज्ञानवैतृष्ण्यसिद्धेः सुगतस्य जगद्धितैषिणः प्रमाणभूतस्य सर्वदावस्थितस्य विधूतकल्पनाजालस्यापि धर्मविशेषाद्विनेयजनसंमततत्त्वोपदेशप्रणयनं संभाव्यते सौत्रांतिकमते विचार्यमाणस्य परमार्थतोऽर्थस्य व्यवस्थापनायोगादिति सूक्तं सुगतोऽपि निर्वाणमार्गस्य न प्रतिपादकस्तत्त्वतो विश्वतत्त्वज्ञतापायात्कपिलादिवदिति। येऽपि ज्ञानपरमाणव एव प्रतिक्षणविशरारवः परमार्थसंतो न बहिरर्थपरमाणवः प्रमाणाभावादवयव्यादिवदिति योगाचारमतानुसारिणः प्रतिपद्यंते तेषामपि न संवित्परमाणवः स्वसंवेदनप्रत्यक्षतः प्रसिद्धास्तत्र तेषामनवभासनादंतरात्मन एव सुखदुःखाद्यनेकविवर्तव्यापिनः प्रतिभासनात् तथा परप्रतिभासोऽनाद्यविद्यावासनाबलात्समुपजायमानो भ्रांतएवेति चेन्न। बाधकप्रमाणाभावात्। नन्वेकः पुरुषः क्रमभुवः सुखादिपर्यायान् सहभुवश्च गुणान् किमेकेन स्वभावेन व्याप्नोत्यनेकेन वा। न तावदेकेन तेषामेकरूपतापत्तेः। नाप्यनेकेन तस्याप्यनेकस्वभावत्वात् भेदप्रसंगादेकत्वविरोधादित्यपि न बाधकं वेद्यवेदकाकारैकज्ञानेन तस्यापसारितत्वात् संवेदनं ह्येकं वेद्यवेदकाकारौ स्वसंवित्स्वभावेनैकेन व्याप्नोति न च तयोरेकरूपता, संविद्रूपेणैकरूपतेवेति चेन् तर्ह्यात्मा सुखदुःखज्ञानादीन् स्वभावेनैकेनात्मत्वेन व्याप्नोति तेषामात्मरूपतयैकत्वाविरोधात् कथमेवं सुखादिभिन्नाकारः प्रतिभास इतिचेद्वेद्यादिभिन्नाकारः प्रतिभासः कथमेकत्र संवेदने स्यादिति समः पर्यनुयोगः। वेद्यादिवासनाभेदादितिचेत सुखादिपर्यायपरिणामभेदादेकत्रात्मनि सुखादिभिन्नाकारः प्रतिभासः किं न भवेत। वेद्याद्याकारप्रतिभासभेदेऽप्येकं संवेदनमशक्यविवेचनत्वादिति वदन्नपि सुखाद्यनेकाकारप्रतिभासेऽप्येक एवात्मा शश्वदशक्यविवेचनात्वादिति वदंतं कथं प्रत्याचक्षीत यथैव हि संवेदनस्यैकस्य वेद्याद्याकाराः संवेदनांतरं नेतुमशक्यत्वादशक्यविवेचनाः संवेदनमेकं तथात्मनः सुखाद्याकाराः शश्वदात्मांतरं नेतुमशक्यत्वादशक्यविवेचनाः कथमेक एवात्मा न भवेत्। यद्यथा प्रतिभासते तत्तथैव व्यवहर्तव्यं यथा वेद्याद्याकारात्मकैकसंवेदनरूपतया प्रतिभासमानं संवेदनं तथा च सुखज्ञानाद्यनेकाकारैकात्मरूपतया प्रतिभासमानश्चात्मा तस्मात्तथा व्यवहर्तव्य इति नातः सुखाद्यनेकाकारात्मा प्रतिभासमानो निराकर्तुं शक्यते। यदि तु वेद्यवेदकाकारयोर्भ्रांतत्वात्तद्विविक्तमेव संवेदनमात्रं परमार्थसदिति निगद्यते तदा तत्प्रचयरूपमेकपरमाणुरूपं वा। न तावत्प्रचयरूपं बहिरर्थपरमाणूनामिव संवेदनपरमाणूनामपि प्रचयस्य विचार्यमाणस्यासंभवात् ॥ नाप्येकपरमाणुरूपं सकृदपि तस्य प्रतिभासाभावाद्बहिरर्थैकपरमाणुवत्। ततोऽपि न संवित्परमाणुरूपोऽपि सुगतः सकलसंतानसंवित्परमाणुरूपाणि चतुरार्यसत्यानि दुःखादीनि परमार्थतः संवेदयते वेद्यवेदकभावप्रसंगादिति न तत्त्वतो विश्वतत्त्वज्ञः स्यात्, येनासौ निर्वाणमार्गस्य प्रतिपादकः समनुम-

भासमानस्यापि कस्यचिदभ्युपगमेऽतिप्रसंगानिवृत्तेः प्रतिभासमानास्तु तेऽपि प्रतिभासमात्रांतःप्रविष्टा एवेति कथं तैः प्रतिभासमात्रस्य विच्छेदः स्वरूपेणास्वरूपेण स्वस्य विच्छेदानुपपत्तेः सन्नपि देशकाला कारैर्विच्छेदः प्रतिभासमात्रस्य प्रतिभासते न वा ? प्रतिभासते चेत्प्रतिभासस्वरूपमेव तस्य च विच्छेद इति नामकरणे न किंचिदनिष्टं । न प्रतिभासते चेत्कथमस्ति न प्रतिभासते चास्तिवेतिवि-प्रतिषेधात् । ननु च देशकालस्वभावविप्रकृष्टाः कथंचिदप्रतिभासमाना अपि संतः सद्भिर्बाधका-भावादिष्यंत एवेति चेन्न । तेषामपि शब्दज्ञानेनानुमानज्ञानेन वा प्रतिभासमानत्वात् । तत्राप्यप्रति भासमानानां सर्वथाऽस्तित्वव्यवस्थानुपपत्तेः ॥ नन्वेवं शब्दविकल्पज्ञाने प्रतिभासमानाः परस्परविरु-द्धार्थप्रवादाः शशविषाणादयश्च नष्टानुत्पन्नाश्च रावणशंखचक्रवर्त्यादयः कथमपाक्रियंते तेषामनपाकरणे कथं पुरुषाद्वैतसिद्धिरिति चेन्न । तेषामपि प्रतिभासमात्रांतःप्रविष्टत्वसाधनात् । एतेन यदुच्यते कैश्चित् "अद्वैतैकांतपक्षेऽपि दृष्टो भेदो विरुध्यते। कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते। कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् । विद्याविद्याद्वयं न स्याद्बंधमोक्षद्वयं तथेति "। तदपि प्रत्याख्यातं क्रियाणां कारकाणां च दृष्टस्य भेदस्य प्रतिभासमानस्य पुण्यपापकर्मद्वैतस्य तत्फलद्वैतस्य च सुखदुःख लक्षणस्य लोकद्वैतस्येह परलोकविकल्पस्य विद्याविद्याद्वैतस्य च सत्येतरज्ञानभेदस्य बंधमोक्षद्वयस्य च पारतंत्र्यस्वभावस्य प्रतिभासमात्रांतःप्रविष्टत्वाद्विरोधकत्वासिद्धेः स्वयमप्रतिभासमानस्य च विरोधकत्वं दुरुपपादं स्वेष्टतत्त्वस्यापि सर्वेषामप्रतिभासमानेन विरोधकेन विरोधापत्तेर्न किंचित्त त्त्वमविरुद्धं स्यात् । यदप्यभ्यधायि " हेतोरद्वैतसिद्धिश्चेद्द्वैतं स्याद्धेतुसाध्ययोः । हेतुना चे द्विना सिद्धिर्द्वैतं वाङ्मात्रतो न किं" इति । तदपि न पुरुषाद्वैतवादिनः प्रतिक्षेपकं (प्रतिभासमानत्वस्य हेतोः सर्वस्य प्रतिभासमात्रांतःप्रविष्टत्वसाधनस्य स्वयं प्रतिभासप्रतिभासमात्रांतः प्रविष्टत्वसिद्धेर्द्वैतसिद्धि निबंधनत्वाभावात् । हेतुना विना चोपनिषद्वाक्यमात्रात्पुरुषाद्वैतसिद्धौ न वाङ्मात्राद्द्वैतसिद्धिः प्रसज्यते न चोपनिषद्वाक्यमपि परमपुरुषादन्यदेव तस्य प्रतिभासमानस्य परमपुरुषस्वभावत्वसिद्धेः) यदपि कैश्चिन्निगद्यते पुरुषाद्वैतस्यानुमानात्प्रसिद्धौ पक्षहेतुदृष्टांतानामवश्यंभावात् तैर्विनाऽनुमान-स्यानुदयात्कुतः पुरुषाद्वैतं सिध्येत् ? पक्षादिभेदस्य सिद्धेरिति तदपि न युक्तिमत् । पक्षादीनामपि प्रतिभासमानानां प्रतिभासांतःप्रतिष्टानां प्रतिभासमात्राबाधकत्वादनुमानवत् । तेषामप्रतिभास मानानां तु सद्भावाप्रसिद्धेः कुतः पुरुषाद्वैतविरोधित्वं । यदप्युच्यते कैश्चित्पुरुषाद्वैतं तत्त्वं परेण प्रमा णेन प्रतीयमानं प्रमेयं तत्त्वं तत्परिच्छित्तिश्च प्रमितिः प्रमाता च यदि विद्यते तदा कथं पुरुषाद्वैतं प्रमाणप्रमेयप्रमातृप्रमितीनां तात्त्विकीनां सद्भावात्तत्त्वचतुष्टयप्रसिद्धिरिति । तदपि न विचारक्षमं । प्रमाणादिचतुष्टयस्यापि प्रतिभासमानस्य प्रतिभासमात्रात्मनः परमब्रह्मणो बहिर्भावाभावात् । तद्बहिर्भूतस्य द्वितीयत्वायोगात् । एतेन षोडशपदार्थप्रतीत्या प्रागभावादिप्रतीत्या च पुरुषा-द्वैतं बाध्यत इति वदन्निवारितः । तैरपि प्रतिभासमानैर्द्रव्यादिपदार्थैरिव प्रतिभासमात्रादबहिर्भूतैः पुरुषाद्वैतस्य बाधनायोगात् । स्वयमप्रतिभासमानैस्तु सद्भावव्यवस्थामप्रतिपद्यमानैस्तस्य बाधने शशविषाणादिभिरपि स्वेष्टपदार्थनियमस्य बाधनप्रसंगात् ॥ एतेन सांख्यादिपरिकल्पितैरपि प्रकृत्यादितत्त्वैः पुरुषाद्वैतं न बाध्यते इति निगदितं बोद्धव्यं । न चात्र पुरुषाद्वैते यमनियमासनप्राणा-यामप्रत्याहारधारणध्यानसमाधयोऽष्टौ योगांगानि योगो वा संप्रज्ञातोऽसंप्रज्ञातश्च योगफलं च विभूतिकैवल्यलक्षणं विरुध्यते प्रतिभासमात्रात्तद्बहिर्भावाभावात् प्रतिभासमानत्वेन तथा भाव प्रसिद्धेः । येऽप्याहुः प्रतिभासमानस्यापि वस्तुनः प्रतिभासाद्भेदप्रसिद्धेः न प्रतिभासांतःप्रविष्टत्वं प्रतिभासो हि ज्ञानं स्वयं न प्रतिभासते स्वात्मनि क्रियाविरोधात्तस्य ज्ञानांतरवेद्यत्वसिद्धेर्नापि तद्विषयभूतं वस्तु स्वयं प्रतिभासमानं तस्य ज्ञेयत्वात् । ज्ञानेनैव प्रतिभासत्वसिद्धेरिति स्वयं प्रतिभास मानत्वं साधनमसिद्धं न कस्यचित्प्रतिभासांतःप्रविष्टत्वं साधयेत् । परतः प्रतिभासमानत्वं तु विरुद्धं प्रतिभासबहिर्भावसाधनत्वादिति तेऽपि स्वदर्शनपक्षपातिन एव ज्ञानस्य स्वयमप्रतिभासने ज्ञानांत

राद्यपि प्रतिभासनविरोधात् प्रतिभासत इति प्रतिभासैकतया स्वातन्त्र्येण प्रतीतिविरोधात् प्रतिभास्यत इत्येव प्रत्ययप्रसंगात् ॥ तस्य परेण ज्ञानेन प्रतिभासमानत्वात् परस्य ज्ञानस्य च ज्ञानांतरप्रतिभासने प्रतिभासतइति सप्रत्ययो न स्यात् ॥ संवेदनांतरेण प्रतिभास्यत्वात्। तथा चानवस्थानान्न किंचित्संवेदनं व्यवतिष्ठेत ॥ नच ज्ञानं प्रतिभासत इति प्रतीतिर्भ्रांता बाधकाभावात्। स्वात्मनि क्रिया विरोधो बाधक इति चेत्का पुनः स्वात्मनि क्रिया विरुध्यते ज्ञप्तिरुत्पत्तिर्वा ? न तावत्प्रथमकल्पना स्वात्मनि ज्ञप्तेर्विरोधाभावात् स्वयं प्रकाशने हि ज्ञप्तिः। तत्र सूर्यालोकनादौ स्वात्मनि प्रतीयत एव, सूर्यालोकः प्रकाशते' 'प्रदीपः प्रकाशते' इति प्रतीतेः। द्वितीयकल्पना तु न बाधकारिणी, स्वात्मन्युत्पत्तिलक्षणायाः क्रियायाः परैरनभ्युपगमात्। न हि किंचित्स्वस्मादुत्पद्यते इति प्रेक्षावताऽनुमन्यते। संवेदनं स्वस्मादुत्पद्यत इति तु दूरोत्सारितमेव। ततः कथं स्वात्मनि क्रियाविरोधो बाधकः स्यात्? न च सर्वा क्रिया वस्तुनः स्वात्मनि विरुध्यत इति प्रतीतिरस्ति तिष्ठत्यास्तभवतीति धात्वर्थलक्षणायाः क्रियायाः स्वात्मन्येव प्रतीतेः। तिष्ठत्यादिधातोरकर्मकत्वात्कर्मणि क्रियानुत्पत्तेः। स्वात्मन्येव कर्तरि स्थानादि क्रियेति चेत्तर्हि भासते तद्धातोरकर्मकत्वात्कर्मणि क्रियाविरोधात् कर्तर्येव प्रतिभासनक्रियाऽस्तु ज्ञानं प्रतिभासत इति प्रतीतेः। सिद्धं च ज्ञानस्य स्वयं प्रतिभासमानत्वे सकलस्य वस्तुनः स्वतः प्रतिभासमानत्वं सिद्धमेव। सुखं प्रतिभासते रूपं प्रतिभासत इत्यत्र बहिर्वस्तुनः स्वातंत्र्येण कर्तृतामनुभवतः प्रतिभासनक्रियाधिकरणस्य प्रतिभासमानस्य निराकर्तुमशक्तेः॥ ततो नासिद्धं साधनं यत पुरुषाद्वैतं न साधयेत्। नापि विरुद्धं परतः प्रतिभासमानत्वाप्रतीतेः, कस्यचित्प्रतिभासाद्बहिर्भावसाधनात्। एतेन परोक्षज्ञानवादिनः संवेदनस्य स्वयं प्रतिभासमानत्वमसिद्धमाचक्षाणाः सकलज्ञेयस्य ज्ञानस्य च ज्ञानात्प्रतिभासमानत्वात्साधनस्य विरुद्धतामभिदधानाः प्रतिक्षिप्ताः ज्ञानं प्रकाशते बहिर्वस्तु प्रकाशत इति प्रतीत्या स्वयं प्रतिभासमानत्वस्य साधनस्य व्यवस्थापनात्। ये त्वात्मा स्वयं प्रकाशते फलज्ञानं चेत्यावेदयति तेषामात्मनि फलज्ञाने वा स्वयं प्रतिभासमानत्वे सिद्धे सर्वस्य वस्तुनः प्रतिभासमानत्वं साधयत्येव। तथाहि विवादाध्यासितं वस्तु स्वयं प्रतिभासते प्रतिभासमानत्वात्। यत्प्रतिभासमानं तत्स्वयं प्रतिभासते यथा भट्टमतानुसारिणामात्मा प्रभाकरमतानुसारिणां वा फलज्ञानं। प्रतिभासमानं चांतर्बहिर्वस्तु ज्ञानज्ञेयरूपं विवादाध्यासितं तस्मात्स्वयं प्रतिभासते। न तावदत्र प्रतिभासमानत्वमसिद्धं सर्वस्य वस्तुनः सर्वथाऽप्यप्रतिभासमानस्य सद्भावविरोधात्। साक्षादसाक्षाच्च प्रतिभासमानस्य तु सिद्धं प्रतिभासमानत्वं ततो भवत्येव साध्यसिद्धिः। साध्याविनाभावनियमनिश्चयादिति निरवद्यं पुरुषाद्वैतसाधनं संवेदनाद्वैतवादिनोऽभिप्रेतानये भवत्येव नहि कार्यकारणभावग्राह्यग्राहकभाववाच्यवाचकसाध्यसाधकबाध्यबाधकविशेषणविशेष्यभावनिराकरणात् संवेदनाद्वैतं व्यवस्थापयितुं शक्यं कार्यकारणभावादीनां प्रतिभासमानत्वात्। प्रतिभासमानत्वप्रतिष्ठानां निराकर्तुमशक्तेः स्वयमप्रतिभासमानानां तु सद्भावाभावात्संवृत्यापि व्यवहारविरोधात् सकलविकल्पवागगोचरातिक्रांततापत्तेः। संवेदनमात्रस्य क्षणिकस्यापि यदि किंचित्कार्यं न कुर्यात्तदा वस्त्वेव न स्यात्। वस्तुनोऽर्थक्रियाकारित्वलक्षणत्वात्। करोति चेत्कार्यकारणभावः सिध्येत्। तस्य कुसुमस्येव स एव कार्यकारणभावः कारणरहितत्वे तु नित्यत्वापत्तिः। संवेदनस्य सतोऽकारणवतो नित्यत्वप्रसिद्धेरिति प्रतिभासमानात्मनः पुरुषतत्त्वस्यैव सिद्धिः स्यात्॥ किंच क्षणिकसंवेदनमात्रस्य ग्राह्यग्राहकवैधुर्यं यदि केनचित्प्रमाणेन गृह्यते। तदा ग्राह्यग्राहकभावः कथं निराक्रियेत। न गृह्यते चेत्कुतो ग्राह्यग्राहकवैधुर्यसिद्धिः? स्वरूपसंवेदनादेवेति चेत्तर्हि संवेदनाद्वैतस्य स्वरूपसंवेदनं ग्राहकं ग्राह्यग्राहकवैधुर्यं तु ग्राह्यमिति स एव ग्राह्यग्राहकभावः॥ स्यान्मतं "नान्योऽनुभाव्योबुध्याऽस्ति तस्यानानुभवोऽपरः ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते" इति वचनान्न बुद्धेः किंचिद्ग्राह्यमस्ति नापि बुद्धिः कस्यचिद्ग्राह्या स्वरूपेऽपि ग्राह्यग्राहकभावाभावात् 'स्वरूपस्य स्वतोगतिः' रित्येतस्यापि संवृत्याभिधानात् परमार्थतस्तु बुद्धिः स्वयं प्रकाशते चकास्ति

त्येवोच्यते न पुनः स्वरूपं गृह्णाति ग्राह्यग्राहकवैधुर्ये च स्वरूपादव्यतिरिक्तं गृह्णाति जानातीत्यभिधीयते । निरंशसंवेदनाद्वैते तथाभिधानाविरोधादिति । तदपि न पुरुषाद्वैतवादिनः प्रतिकूलं स्वयं प्रकाशमानस्य संवेदनस्यैव परमपुरुषत्वात् ॥ नहि तत्संवेदनं पूर्वापरकालव्यवच्छिन्नं संतानांतरबहिरर्थव्यावृत्तं च प्रतिभासते यतः पूर्वापरक्षणसंतानांतरबहिरर्थानामभावः सिध्येत् तेषां संवेदनेनाग्रहणादभाव इतिचेत् स्वसंवेदनस्यापि संवेदनांतरेणाग्रहणादभावोऽस्तु तस्य स्वयं प्रकाशनान्नाभाव इतिचेत् पूर्वोत्तरस्वसंवित्क्षणानां संतानांतरसंवेदनानांच बहिरर्थानामिव स्वयं प्रकाशमानानां कथमभावः साध्यते कथंतेषां स्वयं प्रकाशमानत्वं ज्ञायत इतिचेत् स्वयमप्रकाशमानत्वं तेषां कथं साध्यत इति समानः पर्यनुयोगः ॥ स्वसंवेदनस्वरूपस्य प्रकाशमानत्वमेव तेषामप्रकाशमानत्वमितिचेत्तर्हि तेषां प्रकाशमानत्वमेव स्वसंवेदनस्यैवाप्रकाशमानत्वं किं न स्यात् ? स्वसंवेदनस्य स्वयमप्रकाशमानत्वे परैः प्रकाशमानत्वाभावः साधयितुमशक्यः प्रतिषेधस्य विधिविषयत्वात् सर्वत्र सर्वदा सर्वथाऽप्यसतः प्रतिषेधविरोधात् इतिचेत्तर्हि स्वसंवेदनात्परेषां प्रकाशमानत्वाभावे कथं तत्प्रतिषेधः साध्यत इति समानश्चर्चः । विकल्पप्रतिभासिनां तेषां स्वसंवेदनावभासित्वं प्रतिषिध्यत इतिचेन्न विकल्पावभासित्वादेव स्वयं प्रकाशमानत्वसिद्धेः । तथाहि यद्यद्विकल्पप्रतिभासि तत्तत्स्वयं प्रकाशते यथा विकल्पस्वरूपं तथा च स्वसंवेदनपूर्वोत्तरक्षणाः संतानांतरसंवेदनानि बहिरर्थाश्चेति स्वयं प्रकाशमानत्वसिद्धिः शशविषाणादिभिर्विनष्टानुत्पन्नैश्च भावैर्विकल्पावभासिभिर्व्यभिचार इति चेन्न तेषामपि प्रतिभासमात्रांतर्भूतानां स्वयं प्रकाशमानत्वसिद्धेः अन्यथा विकल्पावभासित्वायोगात् । सोऽयं सौगतः सकलदेशकालविप्रकृष्टानप्यर्थान् विकल्पबुद्धौ प्रतिभासमानान् स्वयमभ्युपगमयन् स्वयंप्रकाशमानत्वं नाभ्युपैतीति किमपि महाद्भुतं ? तथाभ्युपगमे च सर्वस्य प्रतिभासमात्रांतः प्रविष्टत्वसिद्धेः पुरुषाद्वैतसिद्धिरेव स्यात् न पुनस्तद्बहिर्भूतसंवेदनाद्वैतसिद्धिः । माभून्निरंशसंवेदनाद्वैतं चित्राद्वैतं चित्राद्वैतस्य व्यवस्थापनात् । कालत्रयत्रिलोकवर्ति पदार्थाकारासंविच्चित्राप्येका शश्वदशक्यविवेचनत्वात् सर्वस्य वादिनस्तत एवकाचिदेकत्वव्यवस्थापनात् अन्यथा कस्यचिदेकत्वेनाभिमतस्याप्येकत्वासिद्धिरितिचेन्न एवमपि परमब्रह्मण एव प्रसिद्धेः सकलदेशकालाकारव्यापिनः संविन्मात्रस्यैव परमब्रह्मत्ववचनत् । नचैकक्षणस्थायिनी चित्रासंवित् चित्राद्वैतमिति साधयितुं शक्यते तस्याः कार्यकारणभूतचित्रसंविज्ज्ञानंतरीयत्वाच्चित्राद्वैतप्रसंगात्- तत्कार्यकारणचित्रसंविदो ऽनभ्युपगमे सदहेतुकत्वान्नित्यत्वसिद्धेः कथ न चित्राद्वैतमेव ब्रह्माद्वैतमिति न संवेदनाद्वैतवच्चित्राद्वैतमपि सौगतस्य व्यवतिष्ठते सर्वथा शून्यं तु तत्वमसंवेद्यमानं न व्यवतिष्ठते ॥ संवेद्यमानं तु सर्वत्र सर्वथा सर्वदा परमब्रह्मणो नातिरिच्यते तत्राक्षेपसमाधानानां परमब्रह्मसाधनानुकूलत्वात् । ततो न सुगतस्तत्वतः संवृत्या वा विश्वतत्वज्ञः संभवतीति न निर्वाणमार्गस्य प्रतिपादकः स्यात् ॥

परमपुरुष एव विश्वतत्वज्ञः श्रेयोमार्गस्य प्रणेता व्यवतिष्ठतां तस्योक्तन्यायेन साधनात् इत्यपरः सोऽपि न विचारसहः । पुरुषोत्तमस्यापि यथा प्रतिपादनं विचार्यमाणस्यायोगात् । प्रतिभासमात्रं चिद्रूपं परमब्रह्मोक्तं तच्च यथा परमार्थिकं देशकालाकाराणां भेदेऽपि व्यभिचाराभावात् तत्प्रतिभासविशेषाणामेव व्यभिचारादव्यभिचारित्वलक्षणत्वात्तस्येति तच्च विचार्यते । यदेतत्प्रतिभासमात्रं तत् सकलप्रतिभासविशेषरहितं तत्सहितं वा स्यात् ? प्रथमपक्षे तदसिद्धमेव सकलप्रतिभासविशेषरहितस्य प्रतिभासमात्रस्यानुभवाभावात् । केनचित्प्रतिभासविशेषेण सहितस्यैव तस्य प्रतिभासनात्कचित्प्रतिभासविशेषस्याभावेऽपि पुनरन्यत्र भावात्कदाचिदभावेऽपि चान्यदा सद्भावात्केनचिदाकारविशेषेण तदसंभवेऽपि चाकारांतरेण संभवाद्देशकालाकारविशेषापेक्षत्वात् तत्प्रतिभासविशेषाणां तथा व्यभिचाराभावादव्यभिचारित्वासिद्धेः तत्वलक्षणानतिक्रमान्न तत्वबहिर्भावो युक्तः । तथाहि यद्यथैवाव्यभिचारि तत्तथैव तत्वं यथा प्रतिभासमात्रं प्रतिभासमात्रतयैव व्यभिचारि तथैव तत्वं । अनियतदेशकालाकारतयैवाव्यभिचारी च प्रतिभासविशेष इति प्रतिभासमात्रवत्प्रतिभासविशेष-

स्यापि वस्तुत्वसिद्धेः । नहि यो यद्देशतया प्रतिभासविशेषः स तद्देशतां व्यभिचरति । अन्यथा भ्रांतत्वप्रसंगात् । आकाशदेशतया चंद्रप्रतिभासवत् ॥ नापि यो यत्कालतया प्रतिभासविशेषः स तत्कालतां व्यभिचरति । तदव्यभिचारिणोऽसत्यत्वव्यवस्थानाभिसिद्धेः मध्याह्नेमतया स्वप्नप्रतिभासविशेषवत् । नापि यो यदाकारतया प्रतिभासविशेषः स तदाकारतां विसंवदति तद्विसंवादिनो मिथ्याज्ञानत्वसिद्धेः । कामलाद्युपहतचक्षुषः शुक्ले शंखे पीताकारतप्रतिभासविशेषवत् ॥ न च विवर्तैर्देशकालाकाराव्यभिचारिभिः प्रतिभासविशेषैः सदृशा एव देशकालाकाराव्यभिचारिणः प्रतिभासविशेषाः प्रतिक्षिपितुं युज्यंते यत इदं वेदांतवादिनां वचनं शोभेत "आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा । वितथैः सदृशाः संतोऽवितथा एव लक्षिताः" इति तेषामवितथानामाद्यंते चासत्त्वेऽपि वर्तमाने सत्त्वप्रसिद्धेर्बाधकप्रमाणाभावात् ॥ नहि यथा स्वप्नादिभ्रांतप्रतिभासविशेषेषु तत्कालेऽपि बाधकं प्रमाणमुदेति तथा जाग्रद्दशायामभ्रांतप्रतिभासविशेषेषु तत्र साधकप्रमाणस्यैव सद्भावात् । सम्यग्ज्ञानस्य तदा दृष्टोऽर्थोऽर्थक्रियाकारित्वात् तस्य मिथ्यात्वेऽर्थक्रियाकारित्वविरोधात् इंद्रजालादिपरिदृष्टार्थवदिति नच भ्रांतेतरव्यवस्थायां चांडालादयोऽपि विप्रतिपद्यंते तथा चोक्तमकलंकदेवैः "इंद्रजालादिषु भ्रांतमीरयंति न चापरं । अपि चांडालगोपालबाललोलविलोचनाः" इति ॥ किंच तत्प्रतिभासमात्रं सामान्यरूपं द्रव्यरूपं वा ? प्रथमपक्षे सत्तामात्रमेव स्यात् तस्यैव परसामान्यरूपतया प्रतिष्ठानात् तस्य स्वयं प्रतिभासमानत्वे प्रतिभासमात्रमेव तत्त्वमन्यथा तद्व्यवस्थितेरसिद्धेरसत्त्वसिद्धिप्रसंगात् अनुमानविषयत्वात् सत्तासामान्यस्य व्यवस्थितं स्वयं प्रतिभासमानत्वासिद्धेः । सत्ता प्रतिभासत इति तु विषये विषयिधर्मस्योपचारात् प्रतिभासमानत्वं हि विषयिणो ज्ञानस्य धर्मः स विषये सत्तासामान्येऽध्यारोप्यते तदध्यारोपनिमित्तं तु प्रतिभासमानत्वं क्रियाधिकरणत्वं । यथैव हि सवितृप्रतिभासत इति कर्तृस्था प्रतिभासनक्रिया तथा तद्विषयस्याप्युपचर्यते सकर्मकस्य धातोः कर्तृकर्मस्थक्रियार्थत्वात् यथौदनं पचतीति पचनक्रिया पाचकस्था पाच्यमानस्था च प्रतीयते तद्वदकर्मकस्य धातोः कर्तृस्थक्रियामात्रार्थत्वात् परमार्थतः कर्मस्थक्रियाऽसंभवात्कर्तृस्था क्रिया कर्मण्युपचर्यते ॥ ननु च सति मुख्ये स्वयं प्रतिभासमाने कस्यचित् प्रमाणतः सिद्धे परत्र तद्विषये तदुपचारकल्पना युक्ता यथाऽग्नौ दाहपाकाद्यर्थक्रियाकारिणि तद्धर्मदर्शनान्माणवके तदुपचारकल्पनाऽग्निर्माणवक इति । न च किंचित्संवेदनं स्वयं प्रतिभासनं सिद्धं संवेदनांतरसंवेद्यत्वात् । स्वसंवेदनस्य कस्यचिदप्यसंभवात् । सुदूरमपि गत्वा कस्यचित्संवेदनस्य स्वयं प्रतिभासमानस्यानभ्युपगमात् कथं तद्धर्मस्योपचारस्तद्विषये घटेतेति कश्चित् । सोऽपि ज्ञानांतरवेद्यज्ञानवादिनमुपालभतां परोक्षज्ञानवादिनं वा ॥ ननु च परोक्षज्ञानवादी भट्टस्तावन्नोपलभ्यः स्वयंप्रतिभासमानस्यात्मनस्तेनाभ्युपगमात् तद्धर्मस्य प्रतिभासमानस्य विषयेषूपचारघटनात् ॥ घटः प्रतिभासते, पटादयः प्रतिभासंत इति घटपटादिप्रतिभासनान्यथानुपपत्त्या च करणभूतस्य परोक्षस्यापि ज्ञानस्य प्रतिपत्तेरविरोधात् रूपप्रतिभासनाच्चक्षुःप्रतिपत्तिवत् ॥ तथा करणज्ञानमात्मानं चाप्रत्यक्षयदन् प्राभाकरोऽपि नोपालंभमर्हतीति फलज्ञानस्य स्वयं प्रतिभासमानस्य तेन प्रतिज्ञानात् तद्धर्मस्य विषयेषूपचारस्य सिद्धेः । फलज्ञानं च कर्तृकरणाभ्यां विना नोपपद्यत इति । तदेव कर्तारं करणज्ञानं चाप्रत्यक्षमपि व्यवस्थापयति यथा रूपे प्रतिभासनक्रिया फलरूपा चक्षुरर्थं चक्षुश्च प्रत्यापयतीति केचिन्मन्यंते तेषामपि भट्टमतानुसारिणामात्मनः स्वरूपपरिच्छेदेऽर्थपरिच्छेदस्यापि सिद्धेः । स्वार्थपरिच्छेदकपुरुषप्रसिद्धौ ततोऽन्यस्य परोक्षज्ञानस्य कल्पना न किंचिदर्थं पुष्णाति । प्राभाकरमतानुसारिणां फलज्ञानस्य स्वार्थपरिच्छित्तिरूपस्य प्रसिद्धौ करणज्ञानकल्पनावत् । कर्तृकरणांतरेण क्रियायां व्यापारानुपपत्तेः परोक्षज्ञानस्य करणस्य कल्पनानानर्थिकेति चेन्न मनसश्चक्षुरादेश्चांतर्बहिःपरिच्छित्तौ करणस्य सद्भावात् ततो बहिर्भूतस्य करणांतरस्य कल्पनायामनवस्थाप्रसंगात् ततः स्वार्थपरिच्छेदकस्य पुंसः फलज्ञानस्य वा स्वार्थपरिच्छित्तिस्वभावस्य प्रसिद्धौ स्याद्वादिदर्शनस्यैव प्रसिद्धेः । स्वयं प्रतिभासमानस्यात्मनो ज्ञानस्य वा धर्मः कथंचित्तद्विषये कथंचिदुपचर्यत इति सत्तासामान्य प्रति

०

भासते प्रतिभासविषयो भवतीत्युच्यते न चैवं प्रतिभासमात्रे तस्यानुप्रवेशः सिध्येत् परमार्थतः संवेदनस्यैव स्वयं प्रतिभासमानत्वात् ॥ स्यान्मतं न सत्तासामान्यं प्रतिभासमात्रं तस्य द्रव्यादिमात्रव्यापकत्वात् सामान्यादिषु प्रागभावादिषु चाभावात् किं तर्हि सकलभावाभावव्यापकं प्रतिभाससामान्यं प्रतिभासमात्रमभिधीयते इति । तदपि न सम्यक् प्रतिभाससामान्यस्य प्रतिभासविशेषनांतरीयकत्वात्प्रतिभासाद्वैतविरोधात् सन्तोऽपि प्रतिभासविशेषाः सत्यतां न प्रतिपद्यंते संवादकत्वाभावात्स्वप्नादिप्रतिभासविशेषवदिति चेन्न प्रतिभाससामान्यस्याप्यसत्यत्वप्रसंगात् शक्यं हि वक्तुं प्रतिभाससामान्यमसत्यं विसंवादकत्वात् स्वप्नादिप्रतिभाससामान्यवदिति ॥ न हि स्वप्नादिप्रतिभासविशेषा एव विसंवादिनो न पुनः प्रतिभाससामान्यं तद्व्यापकमिति वक्तुं युक्तं शशविषाणगगनकुसुमकूर्मरोमादीनामसत्त्वेऽपि तद्व्यापकसामान्यस्य सत्त्वप्रसंगात् । कथमसतां व्यापकं किंचित्सत्स्यादितिचेत्कथमसत्यानां प्रतिभासविशेषाणां व्यापकं प्रतिभाससामान्यं सत्यमिति समो वितर्कः । तस्य सर्वत्र सर्वदा सर्वथा वा विच्छेदात् सत्यं तदितिचेन्न एवं देशकालाकारविशिष्टस्यैव तस्य सत्यत्वसिद्धेः । सर्वदेशविशेषरहितस्य सर्वकालविशेषरहितस्य च सर्वाकारविशेषरहितस्यैव सर्वत्र सर्वथा सर्वदेति विशेषयितुमशक्तेः । तथा च प्रतिभाससामान्यं सकलदेशकालाकारविशेषविशिष्टमभ्युपगच्छन्नेव वेदांतवादी स्वयमेकद्रव्यमनंतपर्यायं पारमार्थिकमितिप्रतिपत्तुमर्हति प्रमाणवलायातत्वात् तदेवास्तु परमपुरुषस्यैव बोधमयप्रकाशविशदस्य मोहान्धकारापहस्यांतर्यामिनः सुनिर्णीतत्वात् तत्र संशयानां प्रतिघातात्सकललोकोद्योतनसमर्थस्य तेजोनिधेरंशुमालिनोऽपि तस्मिन् सत्येव प्रतिभासनात्, असति चाप्रतिभासनादिति कश्चित् तदुक्तं " यो लोकान् ज्वलयत्यनल्पमहिमा सोऽप्येष तेजोनिधिर्यस्मिन्सत्यवभाति नासति पुनर्देवोंऽशुमाली स्वयं । तस्मिन्बोधमयप्रकाशविशदे मोहांधकारापहे येंऽतर्यामिनि पुरुषे प्रतिहताः संशेरते ते हताः " इति । तदपि न पुरुषाद्वैतव्यवस्थापनपरमाभासते तस्यांऽतर्यामिनः पुरुषस्य बोधमयप्रकाशविशदस्यैव बोध्यमयप्रकाश्यस्यासंभवानुपपत्तेः । यदि पुनः सर्वं बोध्यं बोधमयमेव प्रकाशमानत्वाद्बोधस्वात्मवदिति मन्यते तदा बोधस्यापि बोध्यमयत्वापत्तिरिति पुरुषाद्वैतमिच्छतो बोध्याद्वैतसिद्धिः । बोधाभावे कथं बोध्यसिद्धिरिति चेद्बोध्याभावेऽपि बोधसिद्धिः कथं ? बोध्यनांतरीयकत्वाद्बोधस्य । स्वप्नेंद्रजालादिषु बोध्याभावेऽपि बोधसिद्धेर्न बोध्यनांतरीयकोबोध इति चेन्न तत्रापि बोध्यसामान्यसद्भाव एव बोधोपपत्तेः । न हि संशयस्वप्नादिबोधोऽपि बोध्यसामन्यं व्यभिचरति बोध्यविशेषेष्वेव तस्य व्यभिचाराद्भ्रांतत्वसिद्धेः ॥ न च सर्वस्य बोध्यस्य स्वयंप्रकाशमात्रे सिद्धं स्वयं प्रकाशमानबोधविषयतया तस्य तथोपचारात्स्वयं प्रकाशमानांशुमालिप्रभाभारविषयभूतानां लोकानां प्रकाशमानोपचारवत् ततो यथा लोकानां प्रकाश्यानामभावे न तानंशुमाली ज्वलयितुमलं तथा बोध्यानां नीलसुखादीनामभावे न बोधमयप्रकाशविशदोंऽतर्यामी तान् प्रकाशयितुमीश इति प्रतिपत्तव्यं । तथाचांतः प्रकाशमानानंतपर्यायैकपुरुषद्रव्यव त्, वहिःप्रकाश्यानंतपर्यायैकाचेतनद्रव्यमपि प्रतिज्ञातव्यमिति चेतनाचेतनद्रव्यद्वैतसिद्धिः । न पुरुषाद्वैतसिद्धिः संवेदनाद्वैतसिद्धिवत् । चेतनद्रव्यस्य च सामान्यादेशादेकत्वेऽपि विशेषादेशादनेकत्वं संसारिमुक्तविकल्पात् । सर्वथैकत्वे सकृत्तद्विरोधात् । अचेतनद्रव्यस्य सर्वथैकत्वे मूर्तामूर्तद्रव्यविरोधवत् । मूर्तिमदचेतनद्रव्यं हि पुद्गलद्रव्यमनेकभेदं परमाणुस्कंधविकल्पात् पृथिव्यादिविकल्पाच्च धर्माधर्माकाशकालविकल्पममूर्तिमद्द्रव्यं चतुर्धा चतुर्विधकार्यविशेषानुमेयमिति द्रव्यस्य षड्विधस्य प्रमाणबलात्तत्वार्थालंकारैः समर्थनात् । तत्पर्यायाणां चातीतानागतवर्तमानानंतार्थव्यंजनविकल्पानां सामान्यतः सुनिश्चितासंभवद्बाधकप्रमाणात्परमागमात्प्रसिद्धेः । साक्षात्केवलज्ञानविषयत्वाच्च न द्रव्यैकांतसिद्धिः पर्यायैकांतसिद्धिर्वा । नचैतेषां सर्वद्रव्यपर्यायाणां केवलज्ञाने प्रतिभासमानानामपि प्रतिभासमात्रांतः प्रवेशः सिध्येत् विषयविषयिभेदाभावे सर्वाभावप्रसंगात् निर्विषयस्य प्रतिभासस्यासंभवान्निःप्रतिभासस्य विषयस्य वाऽव्यवस्थानात् । ततश्चाद्वैतैकांते कारकाणां कर्मादीनां क्रियाणां परिस्पंदलक्षणानां धात्वर्थलक्षणानां च दृष्टो भेदो विरुध्यत एव तस्य प्रतिभासमानस्यापि

तत्त्वानि प्रत्यक्षाण्यर्हतः साध्यंते न पुनरुपचारतो यतः सिद्धसाधनमनुमन्यते ॥ तथापि हेतोर्विपक्षवृत्तेरनैकांतिकत्वमित्याशंकायामिदमाह —

हेतोर्न व्यभिचारोऽत्र दूरार्थैर्मंदरादिभिः ।
सूक्ष्मैर्वा परमाण्वाद्यैस्तेषां पक्षीकृतत्वतः ॥ ८९ ॥

नहि कानिचिद्देशांतरितानि कालांतरितानि वा तत्वानि पक्षबहिर्भूतानि संति यतस्तत्र वर्तमानः प्रमेयत्वादिति हेतुर्व्यभिचारी स्यात् तादृशां सर्वेषां पक्षीकरणात् । तथाहि—

तत्त्वान्यंतरितानीह देशकालस्वभावतः ।
धर्मादीनि हि साध्यंते प्रत्यक्षाणि जिनेशिनः ॥ ९० ॥

यथैवहि धर्माधर्मतत्त्वानि कानिचिद्देशांतरितानि देशांतरितपुरुषाश्रयत्वात् । कानिचित्कालांतरितानि कालांतरितप्राणिगणाधिकरणत्वात् । कानिचित्स्वभावांतरितानि देशकालाव्यवहितानामपि तेषां स्वभावतोऽतींद्रियत्वात् । तथा हिमवन्मंदरमकराकरादीन्यपि देशांतरितानि नष्टानुत्पन्नानंतपर्यायतत्त्वानि च कालांतरितानि, स्वभावांतरितानि च परमाण्वादीनि, जिनेश्वरस्य प्रत्यक्षाणि साध्यंते न च पक्षीकृतैरेव व्यभिचारोद्भावनं युक्तं सर्वस्यानुमानस्य व्यभिचारित्वप्रसंगात ॥ ननु माभूद्व्यभिचारी हेतुः दृष्टांतस्तु साध्यविकल इत्याशंकामपहर्तुमाह—

न चास्मादृक्समक्षाणामेवमर्हत्समक्षता ।
न सिध्येदिति मंतव्यमविवादाद्द्वयोरपि ॥ ९१ ॥

येह्यस्मादृशां प्रत्यक्षाः संबद्धा वर्तमानाश्चार्थास्ते कथमर्हतः पुरुषविशेषस्य प्रत्यक्षाः न स्युस्तद्देशकालवर्तिनः पुरुषांतरस्यापि तदप्रत्यक्षत्वप्रसंगात ततो न स्याद्वादिन इव सर्वज्ञाभाववादिनोऽप्यत्रविवदंते । वादिप्रतिवादिनोरविवादाच्च साध्यसाधनधर्मयोर्दृष्टांतेन च न साध्यवैकल्यं साधनवैकल्यं वा यतोऽनन्वयहेतुःस्यात् ॥ नन्वतींद्रियप्रत्यक्षतोऽतरिततत्त्वानि प्रत्यक्षाण्यर्हतः साध्यंते किंवेंद्रियप्रत्यक्षत इति संप्रधार्यं । प्रथमपक्षे साध्यविकलो दृष्टांतः स्यात् । अस्मादृक्प्रत्यक्षाणामर्थानामतींद्रियप्रत्यक्षतोऽर्हत्प्रत्यक्षत्वासिद्धेः । द्वितीयपक्षे प्रमाणबाधितः पक्षः, इंद्रियप्रत्यक्षतोधर्माधर्मादीनामंतरिततत्वानामर्हत्प्रत्यक्षत्वस्य प्रमाणबाधितत्वात् । तथाहि नार्हदिंद्रियप्रत्यक्षं धर्मादीन्यंतरिततत्वानि साक्षात्कर्तुं समर्थमिंद्रियप्रत्यक्षत्वादस्मदादींद्रियप्रत्यक्षवत् इत्यनुमानं पक्षस्य बाधकं न चात्र हेतोः सांजनचक्षुःप्रत्यक्षेणानैकांतिकत्वं । तस्यापि धर्माधर्मादिसाक्षात्कारित्वाभावात् नापीश्वरेंद्रियप्रत्यक्षेण तस्यासिद्धत्वात्स्याद्वादिनामिव मीमांसकानामपि तदप्रसिद्धेरितिच न चोद्यं । प्रत्यक्षसामान्यतोऽर्हत्प्रत्यक्षत्वसाधनात् । सिद्धेवांतरितत्वानां सामान्यतोर्हत्प्रत्यक्षत्वे धर्मादिसाक्षात्कारिणः प्रत्यक्षस्य सामर्थ्यादतींद्रियप्रत्यक्षत्वसिद्धेः । तथा दृष्टांतस्य साध्यवैकल्यदोषानवकाशात कथमन्यथाभिप्रेतानुमानेऽप्ययं दोषो न भवेत । तथाहि नित्यःशब्दःप्रत्यभिज्ञायमानत्वात्पुरुषवदिति । अत्र कूटस्थनित्यत्वं साध्यते कालांतरस्थायिनित्यत्वं वा ? प्रथमकल्पनायामप्रसिद्धविशेषणः पक्षः कूटस्थनित्यत्वस्य क्वचिदन्यत्राप्रसिद्धेस्तत्र प्रत्यभिज्ञानस्यैवासंभवात् पूर्वापरपरिणामशून्यत्वात्प्रत्यभिज्ञानस्य पूर्वोत्तरपरिणामव्यापिन्येकत्र वस्तुनि सद्भावात् । पुरुषे च कूटस्थनित्यत्वस्य साध्यस्याभावात्तस्य सातिशयत्वात् साध्यशून्योदृष्टांतः द्वितीयकल्पनायां तु स्वमतविरोधः । शब्दे कालांतरस्थायिनित्यत्वस्यानभ्युपगमात् । यदि पुनर्नित्यत्वसामान्यं साध्यते सातिशयेतरनित्यत्वविशेषस्य साधयितुमनुपक्रांतत्वादिति मतं तदांतरिततत्त्वानां प्रत्यक्षसामान्यतोऽर्हत्प्रत्यक्षतायां साध्यायां न किंचिद्दोषमुत्पश्यामः इति नाप्रसिद्धविशेषणः पक्षः साध्यशून्यो वा दृष्टांतः प्रसज्यते । सांप्रतं हेतोः स्वरूपासिद्धत्वं प्रतिषेधयन्नाह—

नचासिद्धं प्रमेयत्व कार्त्स्न्यतो भागतोऽपि वा ।
सर्वथाप्यप्रमेयस्य पदार्थस्याव्यवस्थितेः ॥९२॥

यदि षड्भि· प्रमाणैःस्यात्सर्वज्ञ· केन वार्यते ।
इति ब्रुवन्नशेषार्थप्रमेयत्वमिहेच्छति ॥९३॥

चोदनातश्च नि·शेषपदार्थज्ञानसंभवे ।
सिद्धमतरितार्थानां प्रमेयत्वं समक्षवत् ॥९४॥

सोऽयं मीमांसक· प्रमाणषट्कात्सर्वस्यार्थस्य व्यवस्थामभ्युपयन् षड्भि प्रमाणैः समस्तार्थज्ञानं वा निवारयन् चोदना हि भूतं भवतं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थमवगमयितुमलमिति स्वयं प्रतिपाद्यमानः सूक्ष्माद्यन्तरितदूरार्थानां प्रमेयत्वमस्मत्प्रत्यक्षार्थानामिव कथमपह्नुवीत यत· साकल्येन प्रमेयत्वं पक्षाव्यापकमसिद्धं ब्रूयात । ननु च प्रमातर्यात्मनि, करणे च ज्ञाने, फले च प्रमितिक्रियालक्षणे, प्रमेयत्वासंभवात् कर्मतामापन्नेष्वेवार्थेषु प्रमेयेषु भावात्भागासिद्धं साधनं पक्षाव्यापकत्वादिति चेन्नैतदेव प्रमातुरात्मन· सर्वथाप्यप्रमेयत्वे प्रत्यक्षत इवानुमानादपि प्रमीयमाणत्वाभावप्रसङ्गात् प्रत्यक्षेण हि कर्मतयाऽऽत्मा न प्रतीयते इति प्रभाकरदर्शनं । न पुन सर्वेणापि प्रमाणेन, तद्व्यवस्थापनविरोधात् । करणज्ञानं च प्रत्यक्षत कर्मत्वेनाप्रतीयमानमपि घटाद्यर्थपरिच्छित्त्यन्यथानुपपत्त्यानुमीयमानं न सर्वथाप्यप्रमेयं ज्ञातेत्यनुमानादवगच्छति बुद्धिमिति भाष्यकारसंवरवचनविरोधात् फलज्ञानं च प्रमितिलक्षणं स्वसंवेदनप्रत्यक्षमिच्छत कार्यानुमेयं च कथमप्रमेयं सिध्येत् । एतेन करणज्ञानस्य फलज्ञानस्य च परोक्षत्वमिच्छतोऽपि भट्टस्यानुमेयत्वं सिद्धं बोद्धव्यं । घटाद्यर्थप्राकट्यमानुमीयमानस्य सर्वस्य ज्ञानस्य कथंचित्प्रमेयत्वसिद्धे । ततो नांतरितवस्तुषु धर्मिषु प्रमेयत्वं साधनमसिद्धं । वादिन इव प्रतिवादिनोऽपि कथंचित्तत्र प्रमेयत्वप्रसिद्धे सन्दिग्धव्यतिरेकमप्येतन्न भवतीत्याह-

यन्नार्हत·समक्षं तन्नप्रमेयं वहिर्गतः ।
मिथ्यैकांतो यथेत्येव व्यतिरेकोऽपि निश्चितः ॥ ९५ ॥

मिथ्यैकांतज्ञानानि हि नि·शेषाण्यपि परमागमानुमानाभ्यामस्मदादीनां प्रमेयाणि च प्रत्यक्षाणि चार्हत इति न विपक्षतां भजते तद्विषयास्तु परैरभिमन्यमाना· सर्वथैकांता नित्यत्वक्षणिकत्वादयो नार्हत्प्रत्यक्षा इति ते विपक्षा एव न च ते कुतश्चित्प्रमाणात्प्रमीयन्त इति न प्रमेयत्वोपायसत्त्वात । ततो ये नार्हत प्रत्यक्षास्ते न प्रमेया यथा सर्वथैकांतज्ञानविषया इति साध्यव्यावृत्तौ साधनव्यावृत्तिनिश्चया निश्चितव्यतिरेकं प्रमेयत्वं साधनं निश्चितान्वयं च प्रमेयत्वं समर्थितं ततो भवत्येव साध्यसिद्धिरित्याह-

सुनिश्चितान्वयाद्धेतो प्रसिद्धव्यतिरेकत· ।
ज्ञाताऽर्हन् विश्वतत्त्वानामेव सिध्येदबाधित· ॥९६॥

ननु च सूक्ष्मांतरितदूरार्थानां विश्वतत्त्वानां साक्षात्कर्ताऽर्हन् सिद्धत्वेवास्मादनुमानात् पक्षस्य प्रमाणबाधितत्वाद्धेतोश्च बाधितविषयत्वात् । तथाहि देशकालस्वभावांतरितार्था धर्माधर्मादयोऽर्हत· प्रत्यक्षा इति पक्ष· स चानुमानेन बाध्यते धर्मादयो न कस्यचित्प्रत्यक्षा अत्यन्तपरोक्षत्वात् ये तु कस्यचित्प्रत्यक्षास्ते नात्यन्तपरोक्षा यथा घटादयोऽर्था· अत्यन्तपरोक्षाश्च धर्मादयस्तस्मान्न कस्यचित्प्रत्यक्षा इति । न चात्यन्तपरोक्षत्वं धर्मादीनामसिद्धं कदाचित्कचित्कथंचित्कस्यचित्प्रत्यक्षत्वासिद्धे सर्वस्य प्रत्यक्षस्य तद्विषयत्वाभावात् । तथाहि विवादाध्यासितं प्रत्यक्षं न धर्माद्यर्थविषयं प्रत्यक्षशब्दवाच्य-

त्वाद्यदित्थं तदित्थं यथास्मदादिप्रत्यक्षं प्रत्यक्षशब्दवाच्यं च विवदाध्यासितं तत्प्रत्यक्षं तस्मान्न धर्माद्यर्थविषयं इत्यनुमानेन धर्माद्यर्थविषयस्य प्रत्यक्षस्य निराकरणात् न चेदमस्मदादिप्रत्यक्षागोचरविप्रकृष्टार्थग्राहि गृद्ध्रवराहपिपीलिकादिचक्षुःश्रोत्रघ्राणप्रत्यक्षैर्व्यभिचारि साधनं तेषामपि धर्मादिसूक्ष्माद्यर्थाविषयत्वादस्मदादिप्रत्यक्षविषयसजातीयार्थग्रहणानतिक्रमात्स्वविषयस्यैवेंद्रियेण ग्रहणादिंद्रियांतरविषयस्यापरिच्छित्तेः। ननु च प्रज्ञामेधास्मृतिश्रुत्यूहापोहप्रबोधशक्तीनां प्रतिपुरुषमतिशयदर्शनात्कस्यचित्सातिशयं प्रत्यक्षं सिध्यत्परां काष्ठामापद्यमानं धर्मादिसूक्ष्माद्यर्थसाक्षात्कारि संभाव्यतएव। इत्यपि न मंतव्यं। प्रज्ञामेधादिभिः पुरुषाणां स्तोकस्तोकांतरत्वेन सातिशयत्वदर्शनात्। कस्यचिदतींद्रियार्थदर्शनानुपलब्धेः। तदुक्तं भट्टेन "येऽपि सातिशया दृष्टाः प्रज्ञामेधादिभिर्नराः। स्तोकस्तोकांतरत्वेन न त्वतींद्रियदर्शनादिति"। ननु च कश्चित्प्रज्ञावान्पुरुषः शास्त्रविषयान् सूक्ष्मानर्थानुपलब्धुं प्रभुरुपलभ्यते तद्वत्प्रत्यक्षतोऽपि धर्मादिसूक्ष्मानर्थान् साक्षात्कर्तुं क्षमः किमिति न संभाव्यते? ज्ञानातिशयानां नियमयितुमशक्तेरित्यपि न चेतसि निधेयं। तस्य स्वजात्यनतिक्रमेणैव निरतिशयोपपत्तेः। नहि सातिशयं व्याकरणमति दूरमपि जानानो नक्षत्रग्रहचक्रातिचारादिनिर्णयेन ज्योतिःशास्त्रविदोऽतिशेते तद्बुद्धेः शब्दापशब्दयोरेव प्रकर्षोपपत्तेः। वैयाकरणांतरातिशायनस्यैव संभवात्। ज्योतिर्विदोऽपि चंद्रार्कग्रहणादिषु निर्णयेन प्रकर्षं प्रतिपद्यमानस्यापि न भवत्यादिशब्दसाधुत्वज्ञानातिशयेन वैयाकरणातिशायित्वमुत्प्रेक्षते तथा वेदेतिहासादिज्ञानातिशयवतोऽपि कस्यचिन्न स्वर्गदेवताधर्माधर्मसाक्षात्करणमुपपद्यते एतदभ्यधायि "एकशास्त्रपरिज्ञाने दृश्यतेऽतिशयो महान्। नतु शास्त्रांतरज्ञानं तन्मात्रेणैव लभ्यते। ज्ञात्वा व्याकरणं दूरं बुद्धिः शब्दापशब्दयोः। प्रकृष्यते न नक्षत्रतिथिग्रहणनिर्णये। ज्योतिर्विच्च प्रकृष्टोऽपि चंद्रार्कग्रहणादिषु। न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति। तथावेदेतिहासादिज्ञानातिशयवानपि। न स्वर्गदेवताऽपूर्वप्रत्यक्षीकरणे क्षम" इति। एतेन यदुक्तं सर्वज्ञवादिना ज्ञानं क्वचित्परां काष्ठां प्रतिपद्यते प्रकृष्यमाणत्वात् यद्यत्प्रकृष्यमाणं तत्तत्क्वचित्परांकाष्ठां प्रतिपद्यमानं दृष्टं यथा परिमाणमापरमाणोः प्रकृष्यमाणं नभसि, प्रकृष्यमाणं च ज्ञानं तस्मात्क्वचित्परां काष्ठां प्रतिपद्यत इति। तदपि प्रत्याख्यातं ज्ञानं हि धर्मित्वेनोपादीयमानं प्रत्यक्षज्ञानं, शास्त्रार्थज्ञानमनुमानादिज्ञानं, वा भवेद्गत्यंतराभावात् तत्रेंद्रियप्रत्यक्षं प्रतिप्राणिविशेषं प्रकृष्यमाणमपि स्वविषयानतिक्रमेणैव परां काष्ठा प्रतिपद्यते गृद्ध्रवराहादींद्रियप्रत्यक्षज्ञानवत्। न पुनरतींद्रियार्थविषयत्वेनेति प्रतिपादनात्। शास्त्रार्थज्ञानमपि व्याकरणादि विषयं प्रकृष्यमाणं परां काष्ठामुपव्रजन्न शास्त्रांतरविषयतया धर्मादिसाक्षात्कारितया वा तामास्तिघ्नुते तथाऽनुमानादिज्ञानमपि प्रकृष्यमाणमनुमेयादिविषयतया परांकाष्ठामारकंदेत्। न पुनस्तद्विषयसाक्षात्कारितया। एतेन ज्ञानसामान्यं धर्मि क्वचित्परमप्रकर्षमियर्ति प्रकृष्यमाणत्वात् परमाणुवदिति वदन्नपि निरस्तः। प्रत्यक्षादिज्ञानव्यक्तिष्वन्यतमज्ञानव्यक्तेरेव परमप्रकर्षगमनसिद्धेस्तद्व्यतिरेकेण ज्ञानसामान्यस्य प्रकर्षगमनानुपपत्तेस्तस्य निरतिशयत्वात्। यदपि केनचिदभिधीयते श्रुतज्ञानमनुमानज्ञानं वाऽभ्यस्यमानमभ्याससात्मीभावे तदर्थसाक्षात्कारितया परां दशामासदयति तदपि स्वकीयमनोरथमात्रं क्वचिदभ्याससहस्रेणापि ज्ञानस्य स्वविषयपरिच्छित्तौ विषयांतरपरिच्छित्तेरनुपपत्तेर्नहि गगनतलोत्प्लवनमभ्यस्यतोऽपि कस्यचित्पुरुषस्य योजनशतसहस्रोत्प्लवनं लोकांतोत्प्लवनं वा संभाव्यते तस्य दशहस्तांतरगोत्प्लवनमात्रदर्शनात्तदप्युक्तं "दशहस्तांतरं व्योम्नि योनामोत्प्लुत्य गच्छति न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि" इत्यत्राभिधीयते यत्तावदुक्तं विवादाध्यासितं च प्रत्यक्षं न धर्मादि सूक्ष्माद्यर्थविषयं प्रत्यक्षशब्दवाच्यत्वादस्मदादिप्रत्यक्षवदिति तत्र किमिदं प्रत्यक्षं, सत्संप्रयोगे पुरुषस्येंद्रियाणां बुद्धिजन्मप्रत्यक्षमिति चेत्तर्हि विवादाध्यासितस्य प्रत्यक्षस्यैतत्प्रत्यक्षविलक्षणत्वात् प्रत्यक्षशब्दवाच्यत्वेऽपि न धर्मादिसूक्ष्माद्यर्थविषयत्वाभावःसिध्यति यादृशं हींद्रियप्रत्यक्षं प्रत्यक्षशब्दवाच्यं धर्माद्यर्थासाक्षात्कारि दृष्टं तादृशमेव देशांतरे कालांतरे च विवादाध्यासितं प्रत्यक्षं तथा साधयितुं युक्तं तथाविधप्रत्यक्षस्यैव धर्माद्यविषयत्वस्य साधने प्रत्यक्षशब्दवाच्यस्य हेतोर्गमकत्वोपपत्तेः। तस्य

हेतोरस्य विपक्षेण विरोधाभावनिश्चयात् ।
वक्तृत्वादेःप्रकर्षेऽपि ज्ञानानिर्ह्रासिसिद्धितः ॥ १०० ॥
नोपमानमशेषाणां नृणामनुपलंभतः ।
उपमानोपमेयानां तद्बाधकमसंभवात् ॥ १०१ ॥
नार्थापत्तिरसर्वज्ञं जगत्साधयितुं क्षमा ।
क्षीणत्वादन्यथाभावाभावात्तदबाधिका ॥ १०२ ॥
नागमोऽपौरुषेयोऽस्ति सर्वज्ञाभावसाधनः ।
तस्य कार्ये प्रमाणत्वादन्यथाऽनिष्टसिद्धितः ॥ १०३ ॥
पौरुषेयोऽप्यसर्वज्ञप्रणीतो नास्य बाधकः ।
तत्र तस्याप्रमाणत्वाद्धर्मादाविव तत्त्वतः ॥ १०४ ॥
अभावोऽपि प्रमाणं ते निषेध्याधारवेदने ।
निषेध्यस्मरणे च स्यान्नास्तिता ज्ञानमंजसा ॥ १०५ ॥
नचाशेषजगज्ज्ञानं कुतश्चिदुपपद्यते ।
नापि सर्वज्ञसंवित्तिः पूर्वं तत्स्मरणं कुतः ॥ १०६ ॥
येनाशेषजगत्यस्य सर्वज्ञस्य निषेधनं ।
परोपगमतस्तस्य निषेधे स्वेष्टबाधनं ॥ १०७ ॥
मिथ्यैकांतनिषेधस्तु युक्तोऽनेकांतसिद्धितः ।
नासर्वज्ञजगत्सिद्धेः सर्वज्ञप्रतिषेधनं ॥ १०८ ॥
एवं सिद्धः सुनिर्णीतासंभवद्बाधकत्वतः ।
सुखवद्विश्वतत्त्वज्ञः सोऽर्हन्नेव भवानिह ॥ १०९ ॥
स कर्मभूभृतां भेत्ता तद्विपक्षप्रकर्षतः ।
यथा शीतस्य भेत्तेहकश्चिदुष्णप्रकर्षतः ॥ ११० ॥

यस्य धर्मादिसूक्ष्माद्यर्थाः प्रत्यक्षा भगवतोऽर्हतः सर्वज्ञस्यानुमानसामर्थ्यात्तस्य बाधकं प्रमाणं प्रत्यक्षादीनामन्यतमं भवेत् गत्यंतराभावात् तत्र न तावदस्मदादिभिःप्रत्यक्षं सर्वत्र सर्वदा सर्वज्ञस्य बाधकं तेन त्रिकालभुवनत्रयस्य सर्वज्ञरहितस्यापरिच्छेदात् तत्परिच्छेदे तस्यास्मदादिप्रत्यक्षत्वविरोधात् नापि योगिप्रत्यक्षं तद्बाधकं तस्य तत्साधकत्वात्सर्वज्ञाभाववादिनां तदनभ्युपगमाच्च । नाप्यनुमानोपमानार्थापत्त्यागमानां सामर्थ्यात्सर्वज्ञस्याभावसिद्धिः तेषां सद्विषयत्वात् प्रत्यक्षवत् । स्यान्मतं नार्हन्निःशेषतत्त्ववेदी वक्तृत्वात्पुरुषत्वात् ब्रह्मादिवदित्याद्यनुमानात्सर्वज्ञत्वनिराकृतिः सिध्यत्येव सर्वज्ञविरुद्धस्यासर्वज्ञस्य कार्यं वचनं हि तदभ्युपगम्यमानं स्वकारणं किंचिज्ज्ञत्वं साधयति तच्च सिध्यत्स्वविरुद्धं निःशेषज्ञानं निवर्तयतीति विरुद्धकार्योपलब्धिः शीताभावे साध्ये धूमवद्विरुद्धव्याप्तोपलब्धिर्वा सर्व-

ज्ञत्वेन हि विरुद्धमसर्वज्ञत्वं तेन च व्याप्तं वक्तृत्वमिति । एतेन पुरुषत्वोपलब्धिर्विरुद्धव्याप्तोपलब्धि-
रुक्ता सर्वज्ञत्वेन हि विरुद्धमसर्वज्ञत्वं तेन च व्याप्तं पुरुषत्वमिति । तथाच सर्वज्ञो यदि वक्ताऽभ्युप-
गम्यते यदि वा पुरुषस्तथापि वक्तृत्वपुरुषत्वाभ्यां तदभावः सिध्यतीति कश्चिदाचक्षते ? तदेतदप्यनुमा-
नत्रितयं यत्परैः प्रोक्तं न सर्वज्ञस्य बाधकमविनाभावनियमनिश्चयस्यासम्भवात् । हेतोर्विपक्षे-
बाधकप्रमाणाभावात्सर्वज्ञे हि साध्ये तद्विपक्षः सर्वज्ञ एव तत्र च प्रकृतस्य हेतोर्न बाधकमस्ति ।
विरोधो बाधक इति चेन्न सर्वज्ञस्य वक्तृत्वेन विरोधासिद्धेः । तस्य तेन विरोधो हि सामान्यतो विशे-
षतो वा स्यात् । न तावत्सामान्यतो वक्तृत्वेन सर्वज्ञत्वं विरुध्यते, ज्ञानप्रकर्षे वक्तृत्वस्यापकर्षप्रसंगात् ।
यद्धि येन विरुद्धं तत्प्रकर्षे तस्यापकर्षो दृष्टो यथा पावकस्य प्रकर्षे तद्विरोधिनो हिमस्य । न च ज्ञान-
प्रकर्षे वक्तृत्वस्यापकर्षो दृष्टस्तस्मान्न तदविरुद्धं वक्ता च स्यात्सर्वज्ञश्च स्यादिति संदिग्धविपक्षव्या-
वृत्तिको हेतुर्न सर्वज्ञाभावं साधयेत् । यदि पुनर्वक्तृत्वविशेषेण सर्वज्ञस्य विरोधोऽभिधीयते, तदा
हेतुरसिद्ध एव नहि परमात्मनो युक्तिशास्त्रविरुद्धो वक्तृत्वविशेषः सम्भवति च सर्वज्ञाविरोधी तस्य
युक्तिशास्त्राविरुद्धार्थवक्तृत्वनिश्चयात् । न च युक्तिशास्त्राविरोधि वक्तृत्वं ज्ञानातिशयमन्तरेण दृष्टं तत्
सकलार्थविषयं वक्तृत्वं युक्तिशास्त्राविरोधि सिद्ध्यत्सकलार्थवेदित्वमेव साधयेत् इति वक्तृत्वविशेषो
विरुद्धो हेतुः साध्यविपरीतसाधनात् । तथा पुरुषत्वमपि सामान्यतः सर्वज्ञाभावसाधनायोपादीय-
मानं संदिग्धविपक्षव्यावृत्तिकमेव साध्यं न साधयेत् विपक्षेण विरोधासिद्धेः पुरुषश्च स्यात्कश्चित्स-
र्वज्ञश्चेति । नहि ज्ञानातिशयेन तत्पुरुषत्वं विरुध्यते कस्यचित्सातिशयज्ञानस्य महापुरुषत्वसिद्धेः । पुरुषत्व-
विशेषो हेतुश्चेत् स यदज्ञानादिदोषदूषितपुरुषत्वमुच्यते तदा हेतुरसिद्धः परमेष्ठिनि तथाविधपुरुष-
त्वासम्भवात् । अथ निर्दोषपुरुषत्वविशेषो हेतुस्तदा विरुद्धः साध्यविपर्ययसाधनात् सकलाज्ञानादिदोष-
विकलपुरुषत्वं हि परमात्मनि सिध्यत् सकलज्ञानादिगुणप्रकर्षपर्यन्तगमनमेव साधयेत् तस्य तेन
व्याप्तत्वादिति नानुमानं सर्वज्ञस्य बाधकं बुध्यामहे । नाप्युपमानं तस्योपमानोपमेयग्रहणपूर्वकत्वात्
प्रसिद्धे हि गोगवययोरुपमानोपमेयभूतयोः सादृश्ये दृश्यमानाद्गोर्गवये विज्ञानमुपमानं सादृश्योपा-
ध्युपमेयविषयत्वात् । तथोक्तम् । "दृश्यमानाद्यदन्यत्र विज्ञानमुपजायते । सादृश्योपाधि तत्कैश्चि-
दुपमानमिति स्मृतम्" । न चोपमानभूतानामस्मदादीनामुपमेयभूतानां चासर्वज्ञत्वेन साध्यानां पुरुष-
विशेषाणां साक्षात्करणं सम्भवति । न च तेषामसाक्षात्करणेषु तत्सादृश्यं प्रसिध्यति । न चाप्रसिद्धत-
त्सादृश्यः सर्वज्ञाभाववादी सर्वेऽप्यसर्वज्ञाः पुरुषाः कालान्तरदेशान्तरवर्तिनो यथास्मदादय इत्युपमानं
कर्तुमुत्सहते बालंब इव दुग्धस्य चक्रोपमानं तत्साक्षात्करणे वा स एव सर्वज्ञ इति । कथमुपमानं
तदभावसाधनायालम् । तथार्थापत्तिरपि न सर्वज्ञरहितं जगत्सर्वदा साधयितुं क्षमा क्षीणत्वात्तस्याः
साध्याविनाभावनियमाभावात् सर्वज्ञेन रहितं जगत्तत्कृतधर्माद्युपदेशासम्भवान्यथानुपपत्तेरित्यर्थापत्तिरपि
न साधीयसी सर्वज्ञकृतधर्माद्युपदेशासम्भवस्यार्थापत्त्युत्थापकस्यार्थस्य प्रत्यक्षाद्यन्यतमप्रमाणेन विज्ञातुम-
शक्तेः । अन्यपौरुषेयाद्वेदादेव धर्माद्युपदेशसिद्धेः । धर्मे चोदनैव प्रमाणमिति वचनान्न धर्मादिसाक्षात्करी
कश्चित्पुरुषः सम्भवति यतोऽसौ धर्माद्युपदेशकारी स्यात् । तत सिद्ध एव सर्वज्ञकृतधर्माद्युपदेशासम्भव इति
चेन्न । वेदादपौरुषेयाद्धर्माद्युपदेशनिश्चयायोगात् सहि वेदः केनचिद्व्याख्यातो धर्मस्य प्रतिपादकः
स्यादव्याख्यातो वा ? प्रथमपक्षे व्याख्याता रागादिमान् विरागो वा ? रागादिमांश्चेन्न व्याख्याना-
द्वेदार्थनिश्चयस्तदसत्यत्वस्य सम्भवात् । व्याख्याता हि रागाद्द्वेषादज्ञानाद्वा वितथार्थमपि व्याचक्षाणो
दृष्ट इति वेदार्थं वितथमपि व्याचक्षीत, अवितथमपि व्याचक्षीत नियामकाभावात् । गुरुपर्वक्रमायात
वेदार्थवेदी महाजनो नियामक इति चेन्न तस्यापि रागादिमत्त्वे यथार्थवेदित्वानिर्णयानुपपत्तेः गुरुपर्वक्र-
मायातस्य वितथार्थस्यापि वेदे समाम्नायमानस्योपनिषद्वाक्यार्थवदीश्वरादर्थवत्त्वात् नहि स गुरुपर्वक्रमा-
यातो न भवति वेदार्थो वा न चाविषयः प्रतिपद्यते मीमांसकैरग्निष्टोमेन यजेत स्वर्गकाम इत्यादि
वेदवाक्यस्याप्यर्थः कथं वितथः पुरुषव्याख्यानात्सत्यमेव मन्तुं । यदि पुनर्वीतरागद्वेषमोहो वेदस्य व्या

ख्याता प्रतिज्ञायते तदा स एव पुरुषविशेषः सर्वज्ञः किमिति न क्षम्यते वेदार्थानुष्ठानपरायण एव वीतरागद्वेषः पुरुषोऽभ्युपगम्यते वेदार्थव्याख्यानविषय एव रागद्वेषाभावात् न पुनर्वीतसकलविषय रागद्वेषःकश्चित् कस्यचित्कचिद्विषयवीतरागद्वेषस्यापि विषयांतरे रागद्वेषदर्शनात्तथावेदार्थविषय एव वीतमोहपुरुषस्तद्व्याख्याताऽभ्यनुज्ञायते न सकलविषये कस्यचित्कचित्सातिशयज्ञानसद्भावेऽपि विषयांतरेषु अज्ञानदर्शनात् न च सकलविषयरागद्वेषप्रक्षयो ज्ञानप्रकर्षो वा वेदार्थं व्याचक्षाणस्योपयोगी यो हि यद्व्याचष्टे तस्य तद्विषयरागद्वेषाज्ञानाभावः प्रेक्षावद्भिरन्विष्यते रागादिमतोविप्रलंभसंभवात् न पुनः सर्वविषये कस्यच्छिास्त्रांतरे यथार्थव्याख्याननिर्णयविरोधात् तथापि तदन्वेषणे च सर्वज्ञवीतराग एव सर्वस्य शास्त्रस्य व्याख्याताभ्युपगंतव्य इत्यसर्वज्ञशास्त्रव्याख्यानव्यवहारो निखिलजनप्रसिद्धोऽपि न भवेत्। नचैदं युगीनशास्त्रव्याख्याता कश्चित्प्रक्षीणाशेषरागद्वेषः सर्वज्ञः प्रतीयते इति नियतविषय शास्त्रार्थपरिज्ञानं तद्विषयरागद्वेषराहित्यत्वं च यथार्थव्याख्याननिबंधनं तद्व्याख्यातुरभ्युपगंतव्यं तथा वेदार्थव्याचक्षाणस्यापि ब्रह्मप्रजापतिमनुप्रमुखजैमिन्यादेर्विद्यते एव तस्य वेदार्थविषयाज्ञानरागद्वेषविकलत्वादन्यथा तद्व्याख्यानस्य शिष्टपरम्परया परिग्रहविरोधात्ततोवेदस्य व्याख्याता तदर्थज्ञ एव न पुनः सर्वज्ञः तद्विषयरागद्वेषरहित एव न पुनः सकलविषयरागद्वेषशून्यो यतः सर्वज्ञो वीतरागश्च पुरुषविशेषः क्षम्यते इति केचित्तेऽपि न मीमांसका, सकलसमयव्याख्यानस्य यथार्थभावानुषंगात्। स्यान्मतं समयांतराणां व्याख्यानं न यथार्थं बाधकप्रमाणसद्भावात् प्रसिद्धमिथ्योपदेशव्याख्यानवत् इति तदपि न विचारक्षमं वेदव्याख्यानस्यापि बाधकसद्भावात् यथैव हि सुगतकपिलादिसमयांतराणां परस्परविरुद्धार्थाभिधायित्वं बाधकं तथा भावनानियोगविधिधात्वर्थादिवेदवाक्यार्थव्याख्यानानामपि तत्प्रसिद्धमेव। न चैतेषां मध्ये भावनामात्रस्य नियोगमात्रस्य वा वेदवाक्यार्थस्यान्ययोगव्यवच्छेदेन निर्णयः कर्तुं शक्यते सर्वथा विशेषाभावात् तत्राक्षेपसमाधानानां समानत्वादिति देवागमालंकृतौ तत्त्वार्थालंकारे विद्यानन्दमहोदये च विस्तरतो निर्णीतं प्रतिपत्तव्यं ततो न केनचित्पुरुषेण व्याख्याताद्वेदाद्धर्माद्युपदेशः समवतिष्ठते, नाप्यव्याख्यातात्, तस्य स्वयं स्वार्थप्रतिपादकत्वेन तदर्थविप्रतिपत्त्यभावप्रसंगात्। दृश्यते च तदर्थविप्रतिपत्तिर्वैदवादिनामिति न वेदाद्धर्माद्युपदेशस्य संभवः। पुरुषविशेषादेव सर्वज्ञवीतरागात्तस्य संभवाच्चतो न धर्माद्युपदेशासंभवः पुरुषविशेषस्य सिद्धेः यः सर्वज्ञरहितं जगत्साधयेदिति कुतोऽर्थापत्तिः सर्वज्ञस्य बाधिका। यदि पुनरागमः सर्वज्ञस्य बाधकः तदाप्यसावपौरुषेयः पौरुषेयो वा, न तावदपौरुषेयस्तस्य कार्यादर्थादन्यत्र परैः प्रमाण्यानिष्टेरन्यथानिष्टसिद्धिप्रसंगात्, नापि पौरुषेयस्तस्यासर्वज्ञपुरुषप्रणीतस्य प्रमाण्यानुपपत्तेः सर्वज्ञप्रणीतस्य तु परेषामसिद्धेरन्यथा सर्वज्ञसिद्धेः ततस्तदभावायोगादिति न प्रभाकरमतानुसारिणां प्रत्यक्षादिप्रमाणानामन्यतममपि प्रमाणं सर्वज्ञाभावासाधनायालं यतः सर्वज्ञबाधकमभिधीयते। भट्टमतानुसारिणामपि सर्वज्ञस्याभावसाधनमभावप्रमाणं नोपपद्यत एव तद्धि सदुपलंभप्रमाणपंचकनिवृत्तिरूपं साच सर्वज्ञविषयसदुपलंभकप्रमाणपंचकनिवृत्तिरात्मनः परिणामो वा विज्ञानं वान्यवस्तुनि स्याद्गत्यंतराभावात्। न तावत्सर्वज्ञविषयप्रत्यक्षादिप्रमाणरूपेणात्मनः परिणामः सर्वज्ञस्याभावसाधकः सत्यपि सर्वज्ञे तत्संभवात् तद्विषयस्य ज्ञानस्यासंभवाच्चस्यातींद्रियत्वात्परचेतोवृत्तिविशेषवत्। नापि निषेध्यात्सर्वज्ञादन्यवस्तुनि विज्ञानं, तदेकज्ञानसंसर्गिणः कस्यचिद्वस्तुनोऽभावात् घटैकज्ञानसंसर्गिभूतलवत् न हि यथा घटभूतलयोश्चाक्षुषैकज्ञानसंसर्गात् केवलभूतले प्रतिषेध्याद् घटादन्यत्र वस्तुनि विज्ञानं घटाभावव्यवहारं साधयति तथा प्रतिषेध्यात्सर्वज्ञादन्यत्र वस्तुनि विज्ञानं न तदभावसाधनसमर्थं संभवति सर्वज्ञस्यातींद्रियत्वात्तद्विषयज्ञानस्यासंभवात्तदेकज्ञानसंसर्गिणोऽस्मदादिप्रत्यक्षस्यकस्यचिद्वस्तुनोऽनभ्युपगमादनुमानाद्येकज्ञानेन सर्वज्ञतदन्यवस्तुनोः संसर्गात्सर्वज्ञैकज्ञानसंसर्गिणि क्वचिदनुमेयेऽर्थेऽनु-

१ भाट्टः। २ प्राभाकराः। ३ वेदान्तिनः।

मानज्ञानं संभवत्येवेति चेन्न तथा कचित्सर्वज्ञस्य सिद्धिप्रसंगात् सर्वत्र सर्वदा सर्वस्य सर्वज्ञस्याभावे कस्यचिद्वस्तुनस्तेनैकज्ञानसंसर्गायोगात्तदन्यवस्तुविज्ञानलक्षणाद्भावप्रमाणात्सर्वज्ञाभावसाधनविरोधात् । किंच गृहीत्वा निषेध्याधारवस्तुसद्भावं स्मृत्वा च तत्प्रतियोगिनं निषेध्यमर्थं नास्तीति ज्ञानं मानसमक्षानपेक्षं जायत इति येषां दर्शनं तेषां निषेध्यसर्वज्ञाधारभूतं त्रिकालं भुवनत्रयं च कुतश्चित्प्रमाणाद्गृहीत्वा तत्प्रतियोगी च प्रतिषेध्यः सर्वज्ञः स्मर्तव्य एवान्यथा तत्र नास्तिताज्ञानस्य मानसस्यानुपपत्तेः । न च निषेध्याधारत्रिकालजगत्त्रयसद्भावग्रहणं कुतश्चित्प्रमाणान्मीमांसकस्यास्ति नापि प्रतिषेध्यसर्वज्ञस्य स्मरणं तस्य प्रागननुभूतत्वात्पूर्वं तदनुभवे वा कचित्सर्वत्र सर्वदा सर्वज्ञाभावसाधनविरोधात्, ननु च पराभ्युपगमात्सर्वज्ञः सिद्धस्तदाधारभूतं च त्रिकालं भुवनत्रयं सिद्धं, तत्र भूतसर्वज्ञस्मरणनिमित्तं तदाधारवस्तुग्रहणनिमित्तं च सर्वज्ञे नास्तिताज्ञानं मानसमक्षानपेक्षं युक्तमेवेति चेन्न । स्वेष्टबाधनप्रसंगात् पराभ्युपगमस्य हि प्रमाणसिद्धत्वे तेन सिद्धः सर्वज्ञः प्रतिषेधतोऽभावप्रमाणस्य तद्बाधनप्रसंगात् तस्याप्रमाणत्वे न ततो निषेध्याधारवस्तुग्रहणं निषेध्यसर्वज्ञस्मरणं वा स्यात् तदभावे तत्र सर्वज्ञेऽभावप्रमाणं न प्रादुर्भवेदिति तदेव स्वेष्टबाधनं दुर्वारमायातं । ननु चैवं मिथ्यैकांतस्य प्रतिषेधः स्याद्वादिभिः कथं विधीयते तस्य कचित्कथंचित्कदाचिदनुभवाभावे स्मरणासंभवात् तस्याननुस्मर्यमाणस्य प्रतिषेधायोगात्कचित्कदाचित्तदनुभवे वा सर्वथा तत्प्रतिषेधविरोधात् पराभ्युपगमात्प्रसिद्धस्य मिथ्यैकांतस्य स्मर्यमाणस्य प्रतिषेधेऽपि स पराभ्युपगमः प्रमाणमप्रमाणं वा, यदि प्रमाणं तदा तेनैव मिथ्यैकांतस्याभावसाधनाय प्रवर्तमानं प्रमाणं बाध्यते इति स्याद्वादिनामपि स्वेष्टबाधनं, यदि पुनरप्रमाणं पराभ्युपगमस्तदापि ततः सिद्धस्य मिथ्यैकांतस्य स्मर्यमाणस्य नास्तीतिज्ञानं प्रजायमानं मिथ्यैव स्यादिति तदेवस्वेष्टबाधनं परेषामिवेति न मंतव्यं स्याद्वादिनामनेकांतसिद्धेरेव मिथ्यैकांतनिषेधनस्य व्यवस्थानात् प्रमाणतः प्रसिद्धे हि बहिरंतर्वा वस्तुन्यनेकांतात्मनि तत्राध्यारोप्यमाणस्य मिथ्यैकांतस्य दर्शनमोहोदयाकुलितचेतसां बुद्धौ विपरीताभिनिवेशस्य प्रतिभासमानस्य प्रतिषेधः क्रियते प्रतिषेधव्यवहारो वा प्रवर्त्यते विप्रतिपन्नप्रत्यायनाय तथोपपत्त्यासात् । न चैवमसर्वज्ञजगत्सिद्धेरेव सर्वज्ञप्रतिषेधो युज्यते तस्याः कुतश्चित्प्रमाणादसंभवस्य समर्थनात्तदेवमभावप्रमाणस्यापि सर्वज्ञबाधकस्य सदुपलंभकप्रमाणपंचकवत्सर्वथा देशांतरकालांतरपुरुषांतरापेक्षयाऽपि तद्बाधकत्वेनाप्रकाशासिद्धेः सुनिर्णीतासंभवद्बाधकप्रमाणः सर्वज्ञः सुखादिवत्सर्वत्र वस्तुसिद्धौ सुनिर्णीतासंभवद्बाधकप्रमाणत्वमंतरेणाश्वासनिबंधनस्य कस्यचिदभावात् । स च विश्वतत्त्वानां ज्ञाताऽर्हन्नेव परमेश्वरादेर्विश्वतत्त्वज्ञत्वानिराकरणादेवावसीयते । स एव कर्मभूभृतां भेत्ता निश्चीयतेऽन्यथा तस्य विश्वतत्त्वज्ञत्वानुपपत्तेः । स्यादाकूतं कर्मणां कार्यकारणसंतानेन प्रवर्तमानानामनादित्वाद्विनाशहेतोरभावात्कथं कर्मभूभृतां भेत्ता विश्वतत्त्वज्ञोऽपि कश्चिद्व्यवस्थाप्यते इति तदप्यसत् विपक्षप्रकर्षपर्यंतगमनात्कर्मणां संतानरूपतयानादित्वेऽपि प्रक्षयप्रसिद्धेः नयनादिसंततिरपि शीतस्पर्शे कचिद्विपक्षभूतोष्णस्पर्शस्य प्रकर्षपर्यंतगमनाभिर्मूलं प्रलयमुपगच्छन्नोपलभ्यते नापि कार्यकारणरूपतया बीजांकुरसंतानो वानादिरपि प्रतिपक्षभूतदहनाभिर्दग्धबीजो निर्दग्धांकुरो वा न प्रतीयत इति वक्तुं शक्यं, यतः कर्मभूभृतां संतानोऽनादिरपि कश्चित्प्रतिपक्षसात्मीभावात्प्रक्षीयते तथा यथा शीतस्योष्णस्पर्शप्रकर्षविशेषेण कश्चिद्भेत्ता तथा कर्मभूभृतां तद्विपक्षप्रकर्षविशेषेण भेत्ता भगवान् विश्वतत्त्वज्ञ इति सुनिश्चितं नन्वेवं कः पुनः कर्मभूभृतां विपक्ष इति चेदुच्यते ।

तेषामागामिनां तावद्विपक्षः संवरो मतः

तपसा संचितानां तु निर्जरा कर्मभूभृतां ॥ १११ ॥

द्विविधा हि कर्मभूभृतः केचिदागामिनः परे पूर्वभवसंतानसंचिताः तत्रागामिनां कर्मभूभृतां विपक्षस्तावत्संवरस्तस्मिन्सति तेषामनुत्पत्तेः संवरो हि कर्मणामास्रवनिरोधः स चास्रवो मिथ्यादर्शनाविरति-

प्रमादकषाययोगविकल्पात्पंचविधस्तस्मिन् सति कर्मणामास्रवात् कर्मागमनहेतोरास्रव इति व्यपदेशात् कर्माण्यस्त्रवंत्यागच्छंति यस्मादात्मनि स आस्रव इति निर्वचनात्सएव हि बंधहेतुर्विनिश्चितः प्राग्विशेषेण। मिथ्याज्ञानस्य मिथ्यादर्शनेऽतर्भावात् तन्निरोधः पुनः कार्त्स्न्यतो देशतो वा तत्र कार्त्स्न्यतो गुप्तिभिः सम्यग्योगनिग्रहलक्षणाभिर्विधीयते। समितिधर्मानुप्रेक्षापरीषहजयचारित्रैस्तु देशतस्तन्निरोधः सिद्धः सम्यग्योगनिग्रहस्तु साक्षादयोगकेवलिनश्चरमक्षणप्राप्तस्य प्रोच्यते तस्यैव सकलकर्मभूभृन्निरोधनिबंधनत्वसिद्धेः सम्यग्दर्शनादित्रयस्य चरमक्षणपरिप्राप्तस्य साक्षान्मोक्षहेतोस्तथाभिधानात् पूर्वत्र गुणस्थाने तदभावायोगसद्भावात्सयोगकेवलिक्षीणकषायोपशांतकषायगुणस्थाने ततोपि पूर्वत्र सूक्ष्मसांपरायानिवृत्तिबादरसांपराये चापूर्वकरणे चाप्रमत्ते च कषाययोगविशिष्टसद्भावात् ततोपि पूर्वत्र प्रमत्तगुणस्थाने प्रमादकषाययोगनिर्णीते संयतासंयतसम्यग्दृष्टीगुणस्थाने प्रमादकषायविशिष्टयोगानां ततोपि पूर्वस्मिन् गुणस्थानत्रये कषायप्रमादाविरतमिथ्यादर्शनविशिष्टयोगसद्भावनिश्चयात्। योगोहि त्रिविधः कायादिभेदात् 'कायवाङ्मनःकर्म योगः, इति सूत्रकारवचनात् कायवर्गणालंबनोऽऽत्मप्रदेशपरिस्पंदः काययोगो वाग्वर्गणालंबनो वाग्योगो मनोवर्गणालंबनो मनोयोगः 'स आस्रव, इति वचनात् मिथ्यादर्शनाविरतिप्रमादकषायाणामास्रवत्वं न स्यादिति न मंतव्यं योगस्य सकलास्रवव्यापकत्वात्तद्ग्रहणादेव तेषां परिग्रहात्तन्निग्रहे तन्निग्रहप्रसिद्धेः योगनिग्रहे मिथ्यादर्शनादीनां निग्रहः सिद्ध एवायोगकेवलिनि, तदभावात्कषायनिग्रहे तत्पूर्वास्रवनिरोधवत्क्षीणकषाये, प्रमादनिग्रहे पूर्वास्रवनिरोधवदप्रमत्तादौ। सर्वाविरतिनिरोधे तत्पूर्वास्रवमिथ्यादर्शननिरोधवच्च, प्रमत्ते संयतासंयते च। मिथ्यादर्शननिरोधे तत्पूर्वास्रवनिरोधवच्च सासादनादौ। पूर्वपूर्वास्रवनिरोधे ह्युत्तरास्रवनिरोधः साध्यएव न पुनरुत्तरास्रवनिरोधे पूर्वास्रवनिरोधस्तत्र तस्य सिद्धत्वात्कायादियोगनिरोधेऽप्येवं वक्तव्यं तत्राप्युत्तरयोगनिरोधे पूर्वयोगनिरोधस्यावश्यंभावात् काययोगनिरोधे हि तत्पूर्ववाङ्मानसनिरोधः सिद्ध एव वाग्योगनिरोधे च मनोयोगनिरोधः पूर्वयोगनिरोधे तूत्तरयोगनिरोधो भाज्यत इति सकलयोगनिरोधलक्षणया परमगुप्त्या सकलास्रवनिरोधः परमसंवरःसिद्धः। समित्यादिभिः पुनरपरः संवरो देशतएवास्रवनिरोधसद्भावात्तत्र हि यो यदास्रवप्रतिपक्षः स तस्य संवर इति यथायोगमागमाविरोधेनाभिधानीयं कर्मागमनकारणस्यास्रवस्य निरोधे कर्मभूभृतामागामिनामनुत्पत्तिसिद्धेरन्यथा तेषामहेतुकत्वापत्तेः सर्वस्य संसारिणः सर्वकर्मागमनप्रसक्तेश्च ततः संवरो विपक्षः कर्मभूभृतामागामिनामिति स्थितं संचितानांतु निर्जरा विपक्षः सा च द्विविधानुपक्रमोपक्रमिकी च तत्र पूर्वा यथाकालं संसारिणः स्यात् उपक्रमकी तु तपसा द्वादशविधेन साध्यते संवरवत्, यथैवहि तपसा संचितानां कर्मभूभृतां निर्जरा विधीयते यथाऽऽगामिनां संवरोपीति संचितानां कर्मणां निर्जरा विपक्षः प्रतिपाद्यते। अथैतस्य कर्मणां विपक्षस्य परमप्रकर्षः कुतः प्रसिद्धो यतस्तेषामात्यंतिकः क्षयः स्यादित्याह

“ तत्प्रकर्षः पुनः सिद्धः परमः परमात्मनि।
तारतम्यविशेषस्य सिद्धेरुष्णप्रकर्षवत् ॥ ११२ ॥

यस्य तारतम्यप्रकर्षस्तस्य क्वचित्परमः प्रकर्षः सिद्ध्यति यथोष्णस्य, तारतम्यप्रकर्षश्च कर्मणां विपक्षस्य संवरनिर्जरालक्षणस्यासंयतसम्यग्दृष्ट्यादिगुणस्थानविशेषेषु प्रमाणतो निश्चीयते तस्मात्परमात्मनि तस्य परमः प्रकर्षः सिद्ध्यतीत्यवगम्यते। दुःखादिप्रकर्षेण व्यभिचार इति चेन्न दुःखस्य सप्तमनरकभूमौ नरकाणां परमप्रकर्षसिद्धेः सर्वार्थसिद्धौ देवानां सांसारिकसुखपरमप्रकर्षवत्। एतेन क्रोधमानमायालोभानां तारतम्येन व्यभिचारशंका निरस्ता तेषामभव्येषु मिथ्यादृष्टिषु च परमप्रकर्षसिद्धेस्तत्प्रकर्षोहि परमोऽनंतानुबंधित्वलक्षणस्स च तत्र प्रसिद्धः क्रोधादीनामनंतानुबंधिनो तत्र सद्भावात्। ज्ञानहानिप्रकर्षेण व्यभिचार इति चेन्न तस्यापि क्षायोपशमिकस्य हीयमानतया प्रकृष्यमाण-

त्व प्रसिद्धस्य केवलिनि परमप्रकर्षसिद्धेः क्षायिकस्य तु ज्ञानस्यैवानुपलम्भे कुतस्तत्प्रकर्षो येन व्यभिचार शक्यते । के पुनः कर्मभूभृतो यथा विपक्षः परमप्रकर्षभाक् साध्यत इत्यारेकायामिदमाह

कर्माणि द्विविधान्यत्र द्रव्यभावविकल्पतः ।
द्रव्यकर्माणि जीवस्य पुद्गलात्मान्यनेकधा ॥ ११२ ॥
भावकर्माणि चैतन्यविवर्त्तात्मानि भांति नुः ।
क्रोधादीनि स्ववेद्यानि कथंचिच्चिदभेदतः ॥ ११४ ॥
तत्स्कंधराशयः प्रोक्ता भूभृतोऽत्र समाधितः ।
जीवाद्विश्लेषणं भेदः संतानात्यंतसंक्षयः ॥ ११५ ॥

जीवं परतंत्रीकुर्वंति स परतन्त्रीक्रियते वा यैस्तानि कर्माणि, जीवेन वा मिथ्यादर्शनादिपरिणामैः क्रियंत इति कर्माणि तानि द्विप्रकाराणि द्रव्यकर्माणि भावकर्माणि च तत्र द्रव्यकर्माणि ज्ञानावरणादीन्यष्टौ मूलप्रकृतिभेदात्तथाऽष्टचत्वारिंशदुत्तरशतमुत्तरप्रकृतिविकल्पात्तथोत्तरोत्तरप्रकृतिभेदादनेकप्रकाराणि तानि च पुद्गलपरिणामात्मकानि जीवस्य पारतंत्र्यनिमित्तत्वान्निगडादिवत्, क्रोधादिभिर्व्यभिचार इति चेन्न तेषां जीवपरिणामानां पारतंत्र्यस्वरूपत्वात्, पारतंत्र्यं हि जीवस्य क्रोधादिपरिणामो न पुनः पारतंत्र्यनिमित्तं । ननु च ज्ञानावरणदर्शनावरणमोहनीयांतरायाणामेवानंतज्ञानदर्शनसुखवीर्यलक्षणजीवस्वरूपघातित्वात्पारतंत्र्यनिमित्तत्वं न पुनर्नामगोत्रसद्वेद्यायुषां तेषामात्मस्वरूपाघातित्वात्पारतंत्र्यनिमित्तत्वासिद्धेरिति पक्षाव्यापको हेतुर्वनस्पतिचैतन्ये स्वापवदिति चेन्न तेषामपि जीवस्वरूपसिद्धत्वप्रतिबंधित्वात्पारतंत्र्यनिमित्तत्वोपपत्तेः कथमेवं तेषामघातिकर्मत्वमिति चेज्जीवन्मुक्तिलक्षणपरमार्हन्त्यलक्ष्मीघातित्वाभावादिति ब्रूमहे ततो न पक्षाव्यापको हेतुः, नाप्यन्यथानुपपत्तिनियमनिश्चयविकलः पुद्गलपरिणामात्मकत्वाभावेऽन्तरेण पारतंत्र्यनिमित्तत्वस्य साधनस्यानुपपत्तिनियमनिर्णयात्तानि च स्वकार्येण यथानाम प्रतीयमानेनानुमीयंते दृष्टकारणव्यभिचाराददृष्टकारणसिद्धेः । भावकर्माणि पुनश्चैतन्यपरिणामात्मकानि क्रोधादात्मपरिणामानां क्रोधादिकर्मोदयनिमित्तानामौदयिकत्वेऽपि कथंचिदात्मनोऽनर्थान्तरत्वाच्चिद्रूपत्वाविरोधात् ज्ञानरूपत्वे तु तेषां विप्रतिपत्तिः ज्ञानस्यौदयिकत्वाभावाद्धर्माधर्मयोः कर्मरूपयोरात्मगुणत्वादौदयिकत्वं नापि पुद्गलपरिणामात्मकत्वमिति केचित्तेपि न युक्तिवादिनः कर्मणामात्मगुणत्वे तत्पारतंत्र्यनिमित्तत्वायोगात्सर्वदाऽऽत्मनो बंधानुपपत्तेर्मुक्तिप्रसंगात् । न हि यो यस्य गुणः स तस्य पारतंत्र्यनिमित्तं यथा पृथिव्यादेः रूपादिः, आत्मगुणश्च धर्माधर्मसंज्ञकं कर्म परैरभ्युपगम्यत इति न तदात्मनः पारतंत्र्यनिमित्तं स्यात् तत एव च 'प्रधानविवर्त्तः शुक्लं कृष्णं च कर्म, इत्यपि मिथ्या तस्यात्मपारतंत्र्यनिमित्तत्वाभावे कर्मत्वायोगादन्यथातिप्रसंगात् । प्रधानपारतंत्र्यनिमित्तत्वात्तस्य कर्मत्वमिति चेन्न प्रधानस्य तेन बंधोपगमे मोक्षोपगमे च पुरुषकल्पनावैयर्थ्यात् । बंधमोक्षफलानुभवनस्य पुरुषे प्रतिष्ठानान्न पुरुषकल्पनावैयर्थ्यमिति चेत्तदेतदसंबद्धाभिधानं प्रधानस्य बंधमोक्षौ, पुरुषस्तत्फलमनुभवतीति कृतनाशाकृताभ्यागमप्रसंगात्, प्रधानेन हि कृतौ बंधमोक्षौ न च तस्य तत्फलानुभवनमिति कृतनाशः पुरुषेण तु तौ न कृतौ तत्फलानुभवनं च तस्येत्यकृताभ्यागमः कथं परिहर्तुं शक्यः । पुरुषस्य चेतनत्वात्फलानुभवनं, न प्रधानस्याचेतनत्वादिति चेन्न मुक्तात्मनोऽपि प्रधानकृतकर्मफलानुभवनानुपगात् । मुक्तस्य प्रधानसंसर्गाभावान्न तत्फलानुभवनमिति चेत्तर्हि संसारिणः प्रधानसंसर्गाद्बंधफलानुभवनं सिद्धं तथा च पुरुषस्यैव बंधः सिद्धः प्रधानेन संसर्गस्य बंधफलानुभवननिमित्तस्य बंधरूपत्वात्पुरुषस्यैव संसर्गो इति नामकरणात् स चात्मनः प्रधानसंसर्गकारणमंतरेण न संभवतीति पुरुषस्य मिथ्यादर्शनादिपरिणामस्तत्कारणमिति प्रत्येतव्यं । प्रधानपरिणामस्यैव तत्संसर्गकारण

त्वे मुक्तात्मनोपि तत्संसर्गकारणत्वप्रसक्तेरिति मिथ्यादर्शनादीनि भावकर्माणि पुरुषपरिणामात्मकान्येव पुरुषस्य परिणामित्वोपपत्तेस्तस्यापरिणामित्वे वस्तुत्वविरोधान्निरन्वयक्षणिकचित्तवत्। द्रव्यकर्माणि तु पुद्गलपरिणामात्मकान्येव प्रधानस्य पुद्गलपर्यायत्वात्पुद्गलस्यैव प्रधानमिति नामकरणात्, नच प्रधानस्य पुद्गलपरिणामात्मकत्वमसिद्धं पृथिव्यादिपरिणामात्मकत्वात्पुरुषस्यापुद्गलद्रव्यस्य-तदनुपलब्धिर्बुद्ध्यहंकारादिपरिणामात्मकत्वात् नहि प्रधाने बुद्ध्यादिपरिणामो घटते, तथाहि न प्रधानं बुद्ध्यादिपरिणामात्मकं पृथिव्यादिपरिणामात्मकत्वाद्यत्तु बुद्ध्यादिपरिणामात्मकं तन्न पृथिव्यादिपरिणामात्मकं दृष्टं यथा पुरुषद्रव्यं तथा च प्रधानं तस्मान्न बुद्ध्यादिपरिणामात्मकं । पुरुषस्य बुद्ध्यादिपरिणामात्मकत्वासिद्धेर्न वैधर्म्यदृष्टांततेति चेन्न तस्य तत्साधनात्तथाहि बुद्ध्यादिपरिणामात्मकः पुरुषश्चेतनत्वाद्यस्तु न बुद्ध्यादिपरिणामात्मकः स न चेतनो दृष्टो यथा घटादिश्चेतनश्च पुरुषस्तस्माद्बुद्ध्यादिपरिणामात्मक इति सम्यगनुमानात्, तथाकाशपरिणामात्मकत्वमपि प्रधानस्य न घटते मूर्तिमत्पृथिव्यादिपरिणामात्मकस्यामूर्ताकाशपरिणामात्मकत्वविरोधाद्घटादिवत् । शब्दादितन्मात्राणां तु पुद्गलद्रव्यपरिणामात्मकत्वमेव कर्मेंद्रियद्रव्यमनोवत् भावमनोबुद्धींद्रियाणां तु पुरुषपरिणामात्मकत्वसाधनान्न जीवपुद्गलद्रव्यव्यतिरिक्तं द्रव्यांतरमन्यत्र धर्माधर्माकाशकालद्रव्येभ्य इति न प्रधानं नाम तत्त्वांतरमस्ति सत्त्वरजस्तमसामपि द्रव्यभावरूपाणां पुद्गलद्रव्यपुरुषद्रव्यपरिणामत्वोपपत्तेरन्यथा तदघटनादिति द्रव्यकर्माणि पुद्गलात्मकान्येव सिद्धानि भावकर्मणां जीवपरिणामत्वसिद्धेस्तानि च द्रव्यकर्माणि पुद्गलस्कंधरूपाणि परमाणूनां कर्मत्वानुपपत्तेस्तेषां जीवस्वरूपप्रतिबंधकत्वाभावादिति कर्मस्कंधसिद्धिस्ते च कर्मस्कंधा बहव इति कर्मस्कंधराशयः सिद्धास्ते च भूभृत इव भूभृत इति व्यपदिश्यंते समाधिवचनात्तेषां कर्मभूभृतां भेदो विश्लेषणमेव न पुनरत्यंतसंक्षयः सतो द्रव्यस्यात्यंतविनाशानुपपत्तेः प्रसिद्धत्वात्तत एव कर्मभूभृतां भेत्ता भगवान् प्रोक्तो न पुनर्विनाशयितेति निरवद्यमिदं भेत्तारं कर्मभूभृतां ज्ञातारं विश्वतत्त्वानामिति विशेषणद्वितयं मोक्षमार्गस्य नेतारमितिविशेषणवत् ॥

कः पुनर्मोक्ष इत्याह ।

## स्वात्मलाभस्ततो मोक्षः कृत्स्नकर्मक्षयान्मतः
## निर्जरासंवराभ्यां तु सर्वसद्वादिनामिह ॥ ११६ ॥

यत एवं ततः स्वात्मलाभो जीवस्य मोक्षः कृत्स्नानां कर्मणामागामिनां संचितानां च संवरनिर्जराभ्यां क्षयाद्विश्लेषात्सर्वसद्वादिनां मत इति सर्वेषामास्तिकानां मोक्षस्वरूपे विवादाभावं दर्शयति तेषामात्मस्वरूपे कर्मस्वरूपे च विवादात्स च प्रागेव निरस्तोऽनंतज्ञानादिचतुष्टयस्य सिद्धत्वस्य चात्मनः स्वरूपस्य प्रमाणप्रसिद्धत्वान्नह्यचेतनत्वमात्मनः स्वरूपं तस्य ज्ञानसमवायित्वविरोधादाकाशादितत्कारणादृष्टविशेषासंभवाच्च तद्वत्तस्यांतःकरणसंयोगस्यापि दुर्घटत्वात् प्रतीयते च ज्ञानमात्मनि ततस्तस्य नाचैतन्यं स्वरूपं । ज्ञानस्य चैतन्यस्यानित्यत्वात्कथमात्मनो नित्यस्य तत्स्वरूपमिति चेन्नानंतस्य ज्ञानस्यानादेश्चानित्यत्वैकांताभावात्। ज्ञानस्य नित्यत्वे न कदाचिद्ज्ञानमात्मनः स्यादिति चेन्न तदावरणोदये तदविरोधात् एतेन समस्तवस्तुविषयज्ञानप्रसंगोऽपि विनिवारितस्तद्घातिकर्मोदये सति संसारिणस्तदसंभवात्तत्क्षये तु केवलिनः सर्वद्रव्यपर्यायविषयस्य ज्ञानस्य प्रमाणतः प्रसिद्धेः सर्वज्ञत्वस्य साधनात् । चैतन्यमात्रमेवात्मनः स्वरूपमित्यनेन निरस्तं ज्ञानस्वभावरहितस्य चेतनत्वविरोधाद्गगनादिवत्। प्रभास्वरमिदं चित्तमिति स्वसंवेदनमात्रं चित्तस्य स्वरूपं वदन्नपि सकलार्थविषयज्ञानसाधनान्निरस्तः स्वसंविन्मात्रेण वेदनेन सर्वार्थसाक्षात्करणविरोधात् । तदेवं प्रतिवादिपरिकल्पितात्मस्वरूपस्य प्रमाणबाधितत्वात्स्याद्वादिनिगदितमेवानंतज्ञानादिस्वरूपमात्मनो व्यवतिष्ठते ततस्तस्यैव लाभो मोक्षः सिद्धोऽत्र पुनः स्वात्मप्रहाणमितिप्रतिपद्येमहि प्रमाणसिद्धत्वाच्चया कर्मस्वरूपे च विप्रतिपत्तिः कर्मवादिनां कल्पनाभेदात्साच पूर्वनिरस्तेत्यलं विवादेन । ननु च संवरनिर्जरामोक्षाणां भेदाभावः कर्माभावस्वरूपत्वाविशेषादितिचेन्न संवर–

आगामिकर्मानुत्पत्तिलक्षणत्वादास्रवनिरोधः संवर इति वचनात् निर्जरायास्तु संचितकर्मविप्रमोक्षलक्षणत्वादशेषकर्मविप्रमोक्षोनिर्जरेति प्रतिपादनात्कृत्स्नकर्मविप्रमोक्षस्यैव मोक्षत्ववचनात्तत संचितानागतद्रव्यभावकर्मणां विप्रमोक्षस्य संवरनिर्जरयोरभावात्ताभ्यां मोक्षस्य भेद सिद्धः । ननु च नास्तिकान्प्रति मोक्षस्वरूपेऽपि विवाद इति चेन्न तेषामप्रमाणाधिकारात्तदेवाह ।

## नास्तिकानां च नैवास्ति प्रमाणं तन्निराकृतौ ।
## प्रलापमात्रकं तेषां नावधेयं महात्मनां ॥ ११७ ॥

येषां प्रत्यक्षमेव प्रमाणं नास्तिकानां ते कथं मोक्षनिराकरणाय प्रमाणांतरं वदेयु स्वेष्टहानिप्रसंगात् पराभ्युपगतेन प्रमाणेन मोक्षाभावमाचक्षाणां मोक्षसद्भावमेव किंशाचक्षते न चेद्विक्षिप्तमनसः परपर्यनुयोगपरतया प्रलापमात्रं तु महात्मनां नावधेयं तेषामुपेक्षार्हत्वात्तदानिर्विवाद एव मोक्षः प्रतिपत्तव्यः । क स्तर्हि मोक्षमार्ग इत्याह ।

## मार्गो मोक्षस्य वै सम्यग्दर्शनादित्रयात्मकः ।
## विशेषेण प्रपत्तव्यो नान्यथा तद्विरोधतः ॥ ११८ ॥

मोक्षस्य हि मार्गः साक्षात्सम्युपायोविशेषेणप्रज्ञापनीयोऽसाधारणकारणस्य तथाभावोपपत्तेर्न पुनः सामान्यतः साधारणकारणस्य द्रव्यक्षेत्रकालभवभावविशेषस्य सद्भावस्य च त्रयात्मक एव प्रतिपत्तव्यः तथाहि सम्यग्दर्शनादित्रयात्मको मोक्षमार्गः साक्षान्मोक्षमार्गत्वाद्यस्तु न सम्यग्दर्शनादित्रयात्मकः स न साक्षा मोक्षमार्गो यथा ज्ञानमात्रादि साक्षान्मोक्षमार्गश्च विवादाध्यासितस्तस्मात्सम्यग्दर्शनादित्रयात्मक इत्यत्र नाप्रसिद्धो धर्मी मोक्षमार्गमात्रस्य सकलमोक्षवादिनामविवादस्य धर्मित्वात्तत एव नाप्रसिद्धविशेष्यः पक्षो नाप्यप्रसिद्धविशेषण सम्यग्दर्शनादित्रयात्मकत्वस्य व्याधिविमोक्षमार्गेरसायनादौ प्रसिद्धत्वात् । नहि रसायनश्रद्धानमात्रं सम्यग्ज्ञानाचरणरहितं सकलामयविनाशनायालं नापि रसायनज्ञानमात्रं श्रद्धानाचरणरहितं न च रसायनाचरणमात्रं श्रद्धानज्ञानशून्यं तेषामन्यतमापाये सकलव्याधिविप्रमोक्षलक्षणस्य रसायनफलस्यासंभवात्तद्वत्सकलकर्म्ममहाव्याधिविप्रमोक्षोऽपि तत्त्वश्रद्धानज्ञानाचरणत्रयात्मकात्त्वेवोपायादनपायमुपपद्यते तदन्यतमापाये तदनुपपत्तेः । ननु चाय प्रतिज्ञार्थैकदेशासिद्धो हेतुः शब्दानित्यत्वे शब्दत्ववदिति न मतव्य प्रतिज्ञार्थैकदेशत्वेन हेतोरसिद्धत्वायोगात् प्रतिज्ञा हि धर्म्मिधर्मसमुदायलक्षणा तदेकदेशस्तु धर्मी धर्मो वा तत्र न धर्मी तावदसिद्धः प्रसिद्धोधर्म्मीतिवचनात् न चाय धर्मित्वविवक्षायामसिद्ध इति वक्तुं युक्त प्रमाणप्रसिद्धस्यस्तत्प्रत्ययस्याविशेषात् ननु मोक्षमार्गो धर्मी मोक्षमार्गस्य हेतुत्वाच्च न, धर्मिसामान्यरूपस्यासाधनधर्मत्वेन प्रतिपादनाद्विशेषपर सोप्यनुकूलमाचरति साधनधर्मस्य धर्मिरूपत्वाभावे प्रतिज्ञार्थैकदेशत्वनिराकरणात् विशेष धर्मिणं कृत्वा सामान्य हेतु ब्रुवतो न दोष इति परै स्वयमभिधानात्, प्रयत्नानंतरीयकः क्षणिकः शब्द प्रयत्नानंतरीयकत्वादित्यादिवत् क पुनरत्र विशेषो धर्मी मोक्षमार्ग इति ब्रूम कुतोऽस्य विशेष आरोग्यमार्गात् नह्यत्र मार्गसामान्यं धर्मिम किं तर्हि मोक्षविशेषणो मार्गविशेष कथमेवं मोक्षमार्गत्वं सामान्यं मोक्षमार्गाणामनेकव्यक्तिनिष्ठत्वात्कश्चिन्मानसशारीरव्याधिविप्रमोक्षमार्ग कश्चिद्द्रव्यभावसकलकर्म्मणामिति मोक्षमार्गत्वं सामान्यं शब्दत्ववत् शब्दत्वं हि यथा शब्दविशेषे वर्णपदवाक्यात्मके विवादास्पदे तथा ततवितत घनसुषिरशब्देऽपि श्रावणज्ञानजननसमर्थतया (शब्दव्यपदेशनाविकमति) इति शब्दविशेष धर्मिण कृत्वा शब्दत्व सामान्य हेतु ब्रुवाणो न कश्चिद्दोषमास्तिघ्नुते तथानन्वयदोषस्याप्यभावात् तद्वन्मोक्षमार्गविशेष धर्मिणमभिधाय मोक्षमार्गत्व समान्य साधनमभिदधानो नोपालभ्यः । तथा साध्यधर्मोऽपि प्रतिज्ञार्थैकदेशो हेतुत्वेनोपादीयमानो न प्रतिज्ञार्थैकदेशत्वेनासिद्धत्वस्य धर्मिणा व्यभिचारात्प्रतिज्ञार्थैकदेशस्यापि धर्मिणोऽसिद्धत्वानुपपत्ते । किं तर्हि साध्यत्वे

न्नासिद्ध इति न प्रतिज्ञार्थैकदेशो नामासिद्धो हेतुरस्ति विपक्षे बाधकप्रमाणाभावात् । अन्यथानुपपन्नत्वनियमानिश्चयादगमकोऽयं हेतुरितिचेन्न ज्ञानमात्रादौ विपक्षे मोक्षमार्गत्वस्य हेतोः प्रमाणबाधितत्वात् । सम्यग्दर्शनादित्रयात्मकत्वे हि मोक्षमार्गस्य साध्ये ज्ञानमात्रादिर्विपक्षस्तत्र च न मोक्षमार्गत्वं सिद्धं बाधकसद्भावात्तथाहि ज्ञानमात्रं न कर्म महाव्याधिमोक्षमार्गः श्रद्धानाचरणशून्यत्वात् शारीरमानसव्याधिविमोक्षकारणरसायनज्ञानमात्रवत् नाप्याचरणमात्रं तत्कारणं श्रद्धानज्ञानशून्यत्वात् रसायनाचरणमात्रवत् नापि ज्ञानवैराग्ये तदुपायस्तत्वश्रद्धानविधुरत्वाद्रसायनज्ञानवैराग्यमात्रवदिति सिद्धोऽन्यथानुपपत्तिनियमः साधनस्य ततो मोक्षमार्गस्य सम्यग्दर्शनादित्रयात्मकत्वसिद्धिः । परंपरया मोक्षमार्गस्य सम्यग्दर्शनमात्रात्मकत्वसिद्धेर्व्यभिचारी हेतुरितिचेन्न साक्षादितिविशेषणात्साक्षान्मोक्षमार्गत्वं सम्यग्दर्शनादित्रयात्मकत्वं न व्यभिचरति क्षीणकषायचरमक्षणवर्त्तिपरमार्हंत्यलक्षणजीवन्मोक्षमार्ग इवेति सुप्रतीतं तथैवायोगकेवलिचरमक्षणवर्त्तिकृत्स्नकर्मक्षयलक्षणमोक्षमार्गः साक्षान्मोक्षमार्गत्वं सम्यग्दर्शनादित्रयात्मकत्वं न व्यभिचरति तपोविशेषस्य परमशुक्लध्यानलक्षणस्य सम्यक्चारित्रेऽतर्भावादितिविस्तरतस्तत्वार्थालंकारेयुक्त्यागमविरोधेन परीक्षितमवबोद्धव्यं तदेवं विधस्य मोक्षमार्गस्य प्रणेता विश्वतत्त्वज्ञः साक्षात्परंपरया वेति शंकायामिदमाह ।

प्रणेता मोक्षमार्गस्याबाध्यमानस्य सर्वथा ।
साक्षाद्यएव स ज्ञेयो विश्वतत्त्वज्ञताश्रयः ॥११९॥

न हि परंपरया मोक्षमार्गस्य प्रणेता गुरुपर्वक्रमाविच्छेदादधिगततत्त्वार्थशास्त्रार्थोऽप्यस्मदादिभिः साक्षाद्विश्वतत्त्वज्ञतायाः समाश्रयः साध्यते प्रतीतिविरोधात्किं तर्हि साक्षान्मोक्षमार्गस्य सकलबाधकप्रमाणरहितस्य यःप्रणेता स एव विश्वतत्त्वज्ञताश्रयस्तत्त्वार्थसूत्रकारैरुमास्वामिप्रभृतिभिः प्रतिपाद्यते भगवद्भिः साक्षात्सर्वतत्वज्ञतामन्तरेण साक्षादबाधितमोक्षमार्गस्य प्रणयनानुपपत्तेरिति वंदे तद्गुणलब्धय इत्येतद्व्याख्यातुमनाः प्राह

वीतनिःशेषदोषोऽतः प्रवंद्योऽर्हन् गुणांबुधिः ।
तद्गुणप्राप्तये सद्भिरिति संक्षेपतोऽन्वयः ॥१२०॥

यतश्च यः साक्षान्मोक्षमार्गस्याबाधितस्य प्रणेता स एव विश्वतत्त्वानां ज्ञाता कर्मभूभृतां भेत्ताऽतएवार्हन् प्रवंद्यो मुनींद्रैस्तस्य वीतनिःशेषाज्ञानादिदोषत्वात्तस्यानंतज्ञानादिगुणांबुधित्वाच्च योहि गुणांबुधिः स एव तद्गुणलब्धये सद्भिराचार्यैर्वंदनीयः स्यान्नान्य इति मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृतां ज्ञातारं विश्वतत्त्वानां भगवंतमर्हंतमेवान्ययोगव्यवच्छेदेन निर्णीतमहं वंदे तद्गुणलब्ध्यर्थमिति संक्षेपतः शास्त्रादौ परमेष्ठिगुणस्तोत्रस्य मुनिपुंगवैर्विधीयमानस्यान्वयः संप्रदायाव्यवच्छेदलक्षणः पदार्थघटनालक्षणो वा लक्षणीयः प्रपंचतस्तदन्वयस्याक्षेपसमाधानलक्षणस्य श्रीमत्स्वामिसमंतभद्रैर्देवागमाख्याप्तमीमांसायां प्रकाशनात्तत्त्वार्थविद्यानंमहोदयालंकारेषु च तदन्वयस्य व्यवस्थापनादलं प्रसंगपरंपरया अत्र समासतस्तद्विनिश्चयात्कस्मात्पुनरेवंविधोभगवान् सकलपरीक्षालक्षितमोहक्षयः साक्षीकृतविश्वतत्त्वार्थो वंद्यते सद्भिरित्यावेद्यते ।

मोहाक्रांतान्न भवतिगुरोर्मोक्षमार्गं प्रणीति ।
नर्तेतस्याःसकलकलुषध्वंसजा स्वात्मलब्धिः ॥
तस्यैवंद्यःपरगुरुरिहक्षीण मोहस्त्वमर्हन् ।
साक्षात्कुर्वन्नमलकमिवाशेषतत्त्वानि नाथ ॥१२१॥

मोहस्यावस्थानं रागादिप्रपञ्चस्येनाक्रांताद् गुरोर्मोक्षमार्गस्य यथोक्तस्य प्रणीतिर्नोपपद्यते यस्माद्रागद्वेषाज्ञानपरवशीकृतमानसस्य सम्यग्गुरुत्वेनाभिमन्यमानस्यापि यथार्थोपदेशित्वनिश्चयासंभवात् तस्य वितथाभिधानशंकानतिक्रमात् दूरे मोक्षमार्गप्रणीतिर्यथार्था यस्मा मोक्षमार्गप्रणीतेर्विना मोक्षमार्गो भावनाप्रकर्षपर्यंतगमनेन सकलकर्मक्षयणकृत्स्नपरमपदसम्यग्ज्ञानादिलक्षणा स्वात्मोपलब्धिः परमनिर्वृत्तिः कस्यचिन्न घटते तस्मात्तस्मै स्वात्मारम्भाय त्वमर्हन् परमगुरुरिह शास्त्रादौ यथा क्षीणमोहस्यारकरतलभित्तिस्फटिकमणिवत्साक्षात्कृताशेषतत्त्वार्थत्वाच्च न त्वक्षीणमोहः साक्षादशेषतत्त्वानि द्रष्टुं समर्थः कपिलादिवन्नापि साक्षादपरिज्ञाताशेषतत्त्वार्थो मोक्षमार्गप्रणीतये समर्थो न च तदसमर्थः परमगुरुरभिधातुं शक्यस्तद्वदेवेति न मोहाक्रांतः परमात्मा श्रेयसार्थिभिरभिवंदनीयः । कथमेवमाचार्यादयः प्रवंदनीयाः स्युरिति चेत् परमगुरुवचनानुसारितया तेषां प्रवर्त्तमानत्वादंशतो मोहरहितत्वाच्च तेषां वंदनीयत्वमिति प्रतिपद्यामहे तत एव परापरगुरुगुणस्तोत्रं शास्त्रादौ मुनींद्रैर्विहितमिति व्याख्यानमनुवर्णनीयं, पंचानामपि परमेष्ठिनां गुरुत्वोपपत्तेः कार्त्स्न्यतो देशतश्च क्षीणमोहत्वसिद्धेरशेषतत्त्वार्थज्ञानप्रसिद्धेश्च यथार्थाभिधायित्वनिश्चयाद्वितथार्थाभिधानशंकापायान्मोक्षमार्गप्रणीतौ गुरुत्वोपपत्तेस्तत्प्रसादादभ्युदयनिःश्रेयससंप्राप्तेरवश्यंभावाच्चैवमाप्तपरीक्षेयं विहिता हितपरीक्षादक्षैर्विचक्षणैः पुनः पुनरभ्यसितुं परिभावनीयेत्याचक्ष्महे ।

न्यक्षेणाप्तपरीक्षाप्रतिपक्षं क्षपयितुं क्षमा साक्षात् ।
प्रेक्षावतामभीक्ष्णं विमोक्षलक्ष्मीक्षणाय संलक्ष्या ॥ १२२ ॥

श्रीमत्तत्त्वार्थशास्त्राद्भुतसलिलनिधेरिद्धरत्नोद्भवस्य
प्रोत्थानारम्भकाले सकलमलभिदे शास्त्रकारैः कृतं यत् ।
स्तोत्रं तीर्थोपमानं प्रथितपृथुपथं स्वामिमीमांसितं तत्
विद्यानंदैः स्वशक्त्या कथमपि कथितं सत्यवाक्यार्थसिद्ध्यै ॥१२३॥

इति तत्त्वार्थशास्त्रादौ मुनींद्रस्तोत्रगोचरा ।
प्रणीताप्तपरीक्षेयं कुविवादनिवृत्तये ॥१२४॥

विद्यानंदहिमाचलमुखपद्मविनिर्गता सुगंभीरा
आप्तपरीक्षाटीका गंगा बहितरं जयतु ॥ १ ॥

मास्वत्प्रासितदोषा कुमतितमध्वांतभेदने पट्वी ।
आप्तपरीक्षालंकृतिराचन्द्रार्कं चिरं जयतु ॥ २ ॥

स जयतु विद्यानंदो रत्नत्रयभूरिभूषणस्सततं ।
तत्त्वार्थार्णवतरणे सदुपायः प्रकटितो येन ॥ ३ ॥

इत्याप्तपरीक्षा समाप्ता ।



श्रीपरमात्मने नमः ।

सनातनजैनग्रंथमाला ।

२

स्याद्वादविद्यापतिश्रीविद्यानंदस्वामिविरचिता

# पत्रपरीक्षा

**श्रीवर्द्धमानमानुत्य स्याद्वादन्यायनायकं ।**
**प्रबुद्धाशेषतत्त्वार्थं पत्रवाक्यं विचार्यते ॥ १ ॥**

कस्मात्पुनः श्रीवर्द्धमानमर्हंतं भगवंतं स्याद्वादन्यायनायकं प्रकर्षेण साक्षाद्बुद्धाशेषद्रव्यपर्यायात्मजीवादिपदार्थमेवानुत्य पत्रवाक्यमाचार्यपरंपरया विचरत् विचार्यते । नन्वक्षपादाद्येकांतवादिनामन्यतममित्यत्रोच्यते ।

नैकांतवादिनां पत्रवाक्यं संभवदर्थकं । तैस्तत्त्वाधिगमोपायप्रकाशरहितत्वतः ॥ १ ॥
यत्तु संभवदर्थात्मा न तत्तादृक्षमीक्षितं । यथा स्याद्वादभृद्वाक्यं तदृकेदं न तैस्तथा ॥ २ ॥

नन्वक्षपादादीनां पत्रवाक्यं तावन्नेत्ययुक्तं तस्य प्रसिद्धावयवत्वेन प्रसिद्धत्वात् देवदत्तादिवाक्यवत् नापि तदसंभवदर्थकं स्वेष्टस्यार्थस्य साधकत्वात् । न चाऽसाधुगूढपदप्रायमपि पत्रमासज्यते साधुगूढपदप्रायस्यैव निराकुलस्य तस्य तैरावेदितत्वात् । तदुच्यते—

प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकं । साधुगूढपदप्रायं पत्रमाहुरनाकुलं ॥ १ ॥

कथं पुनः प्रसिद्धावयवत्वादिविशेषणविशिष्टं वाक्यं पत्रं नाम तस्य श्रुतिपथसमधिगम्यपदसमुदायविशेषरूपत्वात् पत्रस्य तद्विपरीताकारत्वात् न च यद्यतोऽन्यत्तत्तेन व्यपदिश्यतेऽतिप्रसंगात् नीलादयोपि हि कंबलादिभ्योऽन्ये न ते नीलादिव्यपदेशहेतवः तेषां तद्व्यपदेशहेतुतया प्रतीयमानत्वात् किरीटादीनां पुरुषे तद्व्यपदेशहेतुत्ववत् तद्योगात्तत्र मत्वर्थीयविधानात् । नीलादयः संति येषां ते नीलादयः कंबलादय इति गुणवचनेभ्यो मत्वर्थीयस्याभावप्रसिद्धेरितिचेत् उपचरितोपचारादिति ब्रूमः । श्रोत्रपथप्रस्थायिनो हि शब्दात्मकस्य पदसमुदायविशेषरूपस्य लिप्यामुपचारः तत्र तस्य जनैरारोप्यमाणत्वात् लिप्युपचरितवाक्यस्यापि पत्रे समुपचर्यमाणत्वात् तत्र लिखितस्य पत्रस्थत्वात् तदुपचरितोपचारात् पत्रव्यपदेशसिद्धेः न च यद्यतोऽन्यत्तत्तेनोपचारादुपचारोपचारात् वा व्यपदेष्टुमशक्यं शक्राद्न्यत्र व्यवहर्तृजने शक्राभिप्राये स्फुटमुपचारदर्शनात् ततोऽन्यत्रापि काष्ठादावुपचारोपचारात् शक्रव्यपदेशसिद्धेः तदुक्तं—

---

१ स्वाभाविकमेव । २ आगच्छत् । ३ तेषां । ४ जीवादितत्त्व- । ५ स्वार्थनिश्चयस्य । ६ प्रमाणनयप्रदर्शकवाक्यं । ७ तस्मात् । ८ संभवदर्थात्मैव । ९ आदिशब्देन गामानय शुक्लां दंडेनेत्यादिग्रहणं । १० दोषै रहितं । ११ कर्ण । १२ नीलः कंबल इत्यत्र कंबलोऽयमनेन नीलेन व्यपदिश्यते इत्यत आह । १३ तेषु कंबलादिषु नीलादिव्यपदेशहेतवो न भवंतीत्यर्थः । १४ लिपिरेव वाक्यमिति । १५ वाक्यस्य । १६ भिन्ने । १७ पंडितादौ । १८ आदिशब्देन पाषाणादिग्रहणं ।

मुख्यं शब्दात्मकं वाक्यं ज्ञप्यामारोप्यते जनैः । पत्रस्थत्वात्तु तत्पत्रमुपचारोपचारतः ॥ १ ॥

अथवा प्रकृतवाक्यस्य मुख्यत एव पत्रव्यपदेश इति निगदाम। पदानि त्रायंते गोप्यंते रक्ष्यंते परेभ्यः प्रतिवादिभ्यः स्वयं विजिगीषुणा यस्मिन् वाक्ये तत्पत्रमिति पत्रशब्दस्य निर्वचनसिद्धेः । तथा लोके व्यवहर्तरि शास्त्रे च गुरुपर्वक्रमायाते प्रतीते न च पदानि विनिश्चितपदस्वरूपतदभिधेयतत्त्वेभ्यः परेभ्यः स्वात्मनस्तत्त्वस्येव कुतश्चिद्वर्णविपर्यासनादेः प्रकृतिप्रत्ययादिगोपनाद्वा त्रायसमभवात् पदगूढादिकाव्यवत्तदुक्तं—

त्रायंते वा पदान्यस्मिन्परेभ्यो विजिगीषुणा । कुतश्चिदिति पत्रं स्याल्लोके शास्त्रे च रूढितः ॥२॥

न चैवमसाधुपदासदमपि वाक्यं पत्रमासज्यते सुस्पष्टपदमेव वा साधुगूढपदप्रायमिति वचनात्तदुक्तं—

नचासाधुपदं वाक्यं प्रस्पष्टपदमेव वा । साधुगूढपदप्रायमिति तस्य विशेषणात् ॥ १ ॥

पदपादादिगूढकाव्यमेव पत्रं प्राप्नोति इति चेन्न प्रसिद्धावयवत्वेन विशिष्टस्य पत्रत्ववचनात् न हि पदगूढादिकाव्यं प्रमाणसिद्धप्रतिज्ञाद्यवयवविशेषणतया किंचित्प्रसिद्धं तस्य तथा प्रसिद्धौ पत्रव्यपदेशसिद्धेरबाधितत्वात्तदुक्तं—

पदगूढादिकाव्यं च नैवं पत्रं प्रसज्यते । प्रसिद्धावयवत्वेन विशिष्टस्याभिधानतः ॥

स्वयमिष्टस्यार्थस्यासाधकमपि तादृग्वाक्यं पत्रमेवमासक्तमिति चेन्न स्वेष्टार्थसाधनस्यैवेह पत्रविचारे पत्रत्ववचनात् तदप्यभिहितं—

स्वेष्टार्थासाधनस्यापि नैवं पत्रत्वमापतेत् । स्वेष्टार्थसाधनस्यैव पत्रत्ववचनादिह ॥

ततो नाक्षपादादीनामेकांतवादिनां पत्रवाक्यमसंभवदर्थकं इति केचित्तदसत् यथोक्तलक्षणस्य पत्रवाक्यस्य तेषां विचार्यमाणस्याव्यवस्थितेः तथाहि—नाक्षपादस्य तावद्यथोक्तलक्षणं पत्रवाक्यं संभवति प्रसिद्धावयवत्वस्य विरहात्सुगतादीनामिव । तदवयवा हि प्रतिज्ञादयः पंचाक्षपादेनाभिधीयंते प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति सूत्रप्रणयनात् । तत्रागमः प्रतिज्ञा विश्वतश्चक्षुरिति विश्वतो मुखो विश्वतो बाहुरिति विश्वतः पात् संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक इति यथा आगमार्थो वा प्रतिज्ञा विवादाध्यासितमुपलब्धिमत्कारणकमिति । यथा हेतुरनुमानं तेन प्रतिज्ञातार्थस्यानुमीयमानत्वात् कार्यत्वादिति । यथा उदाहरणं प्रत्यक्षं वादिप्रतिवादिनोर्यत्र बुद्धिसाम्यं तदुदाहरणमिति वचनात् वस्त्रादिवदिति यथा उपनयमुपमानं दर्शितः धर्मिसाध्यधर्मिणो सादृश्यात्, "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति" वचनात् यत्कार्यं तदुपलब्धिमत्कारणकं दृष्टं यथा वस्त्रादि तथा च विवादाध्यासितमिति । यथा सर्वेषामेकविषयत्वप्रदर्शनफलं निगमनं तस्मादुपलब्धिमत्कारणकमिति यथा आगमानुमानप्रत्यक्षोपमानवत् फलसमुदायरूपत्वात्पंचानामवयवानामिति व्याख्यानात् । न चैते पंचावयवाः प्रमाणतो विचार्यमाणा विपश्चितेतसि सुनिश्चिताश्चकासति, पत्रवाक्याभासेऽपि संभवात् तेषां पक्षधर्मत्वसपक्षेसत्त्वविपक्षासत्त्वमात्राणामिव त्रयाणामवयवानां सुगतसंमतानां पीतादीनामिव कपिलविकल्पितानां तदभावेऽपि पत्रवाक्यस्य स्वार्थसाधनस्य दर्शनात् साध्याविनाभावनियमनिश्चयलक्षणादेव हेतोः साध्यप्रसिद्धेः तदुक्तं—

न चैव लक्षणं पत्रमक्षपादस्य युज्यते । प्रसिद्धावयवत्वस्य विरहात्सुगतादिवत् ॥ १ ॥

पत्रस्यावयवाः पंच प्रतिज्ञादय इत्यसत् । पंचाभासेऽपि सद्भावात्तेषां त्रैरूप्यमात्रवत् ॥ २ ॥

तदभावेऽपि पत्रस्य स्वार्थसाधनतेक्षणात् । हेतोः साध्याविनाभावनियमात्मकतो यथा ॥३॥

सत्त्वसत्त्वादितित्तरव्यैपात्साध्यसाधनदर्शनं । व्याप्त्या सामर्थ्यतः सर्वनामाभावेऽपि निश्चितं ॥४॥

ननु च यत्कृतकं तदनित्यं दृष्टं यथा घट इत्यादौ सति सर्वनामप्रयोगे व्याप्त्या साध्यसाधनवचन-

१ फलसमुदायत्वात् । २ सर्वे तैमतः । ३ परंपरा । ४ वाक्यस्य । ५ पत्रत्वाभिधानात् । ६ वादिप्रतिवादिभ्यां । ७ प्रसिद्धमवयवं साधुगूढपदप्रायं च । ८ अन्यथापि । ९ न प्राप्नोति । १० तदेव विवृणोति । ११ धर्मधर्मिसमुदायः प्रतिज्ञा । १२ सर्वदर्शित्वात् । १३ बहुधाप्रमेयेशुरत्वात् । १४ सर्वकर्तृत्वात् । १५ सर्वगतत्वात् । १६ पुण्यपापाभ्यां । १७ परमाणुभिः । १८ क्षित्यादिकं । १९ बुद्धिमत्कारणकं । २० प्रसिद्धावयवानां । २१ कार्यत्वात् । २२ पूर्वोक्तसूत्रव्याख्यानात् ।

मुपलब्धं न पुनरसति यतः सत्सदित्यत्र सर्वनामप्रयोगाभावेऽपि संक्षेपतस्तत्सिद्धयेत् धर्मिणश्चावचनमिहायुक्तं अग्निरत्रधूमादित्यादिषु धर्मिवचनदर्शनादिति कश्चित् सोऽप्यनालोचितवचनपथः सामर्थ्याद्गम्यमानस्य सर्वनाम्नो प्रयोगे विरोधवैधुर्यात् पंचावयववादिनः साधर्म्यावयवव्याख्यानादर्थतोगम्यमानानां वैधर्म्यावयवानामिव क्वचिदवश्यं तत्प्रयोगे पंचावयववचने न्यूनतानुषंगात् अवयववादिनां बौद्धानां त्र्यंशस्य हेतोर्भाषणात् सामर्थ्यतो गम्यमानानां प्रतिज्ञादीनामिव तत्प्रयोगे स्वयमसाधनांगवचनस्य निग्रहाधिकरणस्य तैरभिधानात् तत एव धर्मिणोऽप्यवचनमिति संक्षिप्तपत्रवाक्येन विरुद्ध्यते तस्य परीक्षादक्षैरर्थपूर्णतयोपलक्षितत्वात् तदुक्तं—

वैधर्म्यावयवा यद्वत्पंचावयववादिनः । साधर्म्यावयवाख्यानाद्गम्यंतेऽर्थादभाषिताः ॥ १ ॥
प्रतिज्ञायाश्च केषांचिद्धेतोस्त्र्यंशस्य भाषणात् । सामर्थ्याद्गम्यमानत्वान्न प्रयोज्या यथैव तु ॥२॥
तथा सामर्थ्यगम्यत्वात्सर्वनाम्नोप्यभाषण । क्वचिदिष्टं परीक्षायां दक्षैर्धर्मिण एव च ॥ ३ ॥

नन्वेवं क्वचिदपि प्रतिज्ञादिप्रयोगे न स्याद्वादिनां युक्तरूपोभवेत् तस्य सामर्थ्याद्गम्यमानत्वात्सर्वनामवदिति न मनीषिभिर्मनसि निधेयं तेषां प्रतिपाद्यानुरोधेन प्रयोगोपगमात् यथैव हि कस्यचित्प्रतिबोध्यस्यानुरोधेन साधनवाक्ये संधाभिधीयते दृष्टांतादिकमपि न चैवं साधनस्यैकलक्षणत्वं स्वैयं परीक्षितमपक्षिप्यते ततोऽन्यांगानां सतामपि तल्लक्षणत्वापायात्साधनाभासेपि तत्सभवादसाधारणताविरहात् तथैव हि कुमारनंदिभट्टारकैरपि स्ववादन्याये निगदितत्वात्तदाह—

प्रतिपाद्यानुरोधेन प्रयोगेषु पुनर्यथा । प्रतिज्ञा प्रोच्यते तज्ज्ञैस्तथोदाहरणादिकं ॥ १ ॥
न चैवं साधनस्यैकलक्षणत्वं विरुध्यते । हेतुलक्षणतापायादन्यांगस्य तथोदितं ॥ २ ॥
अन्यथानुपपत्त्येकलक्षणं लिंगमंग्यते । प्रयोगपरिपाटी तु प्रतिपाद्यानुरोधतः ॥ ३ ॥

ननु चातिसंक्षिप्तपत्रवाक्ये हेतुरेव प्रयोक्तव्यः तावन्मात्रात्साध्यमवबोद्धुं समर्थान् नरान्प्रति साध्याभिधानस्य निरर्थकत्वात् प्रपंचतारतम्यात् साध्यं निश्चेतुमीशान् प्रति द्वौ चावयवौ प्रयोक्तव्यौ पक्षो हेतुश्चेति त्रयश्चावयवाः कांश्चन प्रतिपक्षो हेतुर्दृष्टांतश्चेति । चत्वारो वा तएवावयवाः सोपनयाः परानुग्रहप्रवणैः सद्भिः प्रयोक्तव्याः । पंच वा प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात् । अन्यथा तत्प्रतिपत्तेरयोगादित्यन्ये प्राहुः तदाह—

हेतुरेव प्रयोक्तव्यस्तावन्मात्रात्प्रवेदितुं । समर्थान्प्रतिबोध्यान् नॄन् साध्यं संक्षेपतो ननु ॥ १ ॥
द्वौ च त्रयश्च चत्वारः पंच चावयवाः परे । प्रयोक्तव्याः प्रपंचेन सद्भिरित्यपरे विदुः ॥२॥

तेऽप्येवं प्रष्टव्याः हेतुस्तावत्केवलः प्रयुज्यमानः कथं प्रयुज्यत इति यदि प्रथमांतः सन्सदित्येत्र तदास्य कुतः साध्यत्वव्यवच्छेदः साध्यलक्षणवैकल्यात् सत्सत्त्वस्य प्रसिद्धत्वात् साध्यस्याप्रसिद्धलक्षणत्वात् किं पुनः सत्सदित्युच्यते यतस्तत्सकलजनप्रसिद्ध साध्यव्यवच्छेदेन साधनत्वेनैव बुद्ध्यामहे न पुनः साध्यनिर्देशत्वेन शंकामहे सत्सदिति चेत् इमे ब्रूमहे सदनं सदिति प्रमा यतोऽत्राभिप्रेता सर्वगत्यर्थत्वात् गत्यर्थस्य च

१ सर्वमनेकांतात्मकमुत्पादव्ययध्रौव्ययुक्तं सत्सत्सत्त्वादित्यर्थः । २ अप्रतिपादनं । ३ पर्वतादौ नात्र । ४ विरोधविरोधात् । ५ साधर्म्यावयवपंचकस्यैव वचेन । ६ हीनं अन्यतमेन न्यूनमिति निग्रहस्थानानुषंगात । ७ यत्र पंचावयवप्रयोगे । ८ परिपूर्णतया । ९ पक्षधर्मत्वसपक्षेसत्त्वविपक्षाद्व्यावृत्तिरूपस्य । १० प्रतिज्ञा संधा प्रतिज्ञाः, मर्यादेत्यमरः । ११ उपनयनिगमनयोर्ग्रहणं । १२ इति पराशंकां मनसि कृत्वा निराकृतवान् जैनः । १३ अन्यथानुपपत्तिः । १४ प्रतिज्ञादीनां विशेषरूपत्वरहितत्वात् । १५ तदेव विवृणोति । १६ प्रवक्ष्यमाणं वर्त्तते । १७ अंगीक्रियते । १८ जैनान्प्रति । १९ सांख्यान् प्रति । २० मीमांसकान्प्रति । २१ योगान्प्रति । २२ उक्तविपर्यये एवं न प्रयुज्यते चेत् । २३ सौगताः । २४ प्रपंचेन साध्यं प्रवेदितुं समर्थान् नॄन् प्रति । २५ अहो । २६ प्रथमांतः । २७ केन प्रकारेण । २८ व्यावृत्तिः । २९सत्सदितिलिंग ३० प्रतिपादनत्वेन । ३१ सत्सदिति तद्धेतुरित्यर्थः । ३२ बौद्धाः । ३३ युट् प्रत्ययोऽत्र ज्ञातव्यः । ३४ कारणात् । ३५ अनुमाने ।

त्मकत्वलक्षणसत्वमंतरेण सत्सत्वाख्या प्रमेयतापि नोपपद्यत एव प्रमाणबलतः प्रसिद्धायास्तस्याः अन्यत्र क्वचित्सद्भिर्निश्चयात् । आत्मादिद्रव्यमुत्पादव्ययनिर्मुक्तं प्रमेयं सिद्धं पर्यायश्च ध्रौव्यनिर्मुक्तः प्रमेयोऽस्तीति चायुक्तं द्रव्यपर्याययोर्भेदाभेदैकांतेऽनवस्थानात् तथा चैतत्सकलमभ्यधायि ।

तेऽपि प्रयुंजते हेतुं सत्सत्वं यदि केवलं । सत्सदित्येव साध्यत्वव्यवच्छेदोऽस्य तत्कृतः ॥१॥
साध्यलक्षणवैकल्यात्सत्यत्वस्य प्रसिद्धितः । सदनं सत्प्रमा ह्यत्र सती सा यत्र तन्मतं ॥२॥
सत्सत्प्रमेयमेतच्च प्रसिद्धं मानवादिनः । संविन्मात्रेऽपि मानस्य स्वरूपेस्ति प्रमेयता ॥ ३ ॥
उत्पादादिस्वभावत्वं सत्त्वं साध्यं तु युज्यते । तस्याप्रसिद्धितः साध्यलक्षणं प्रतिपत्तितः ॥४॥
एवमाचक्षते येऽपि तेषां स्याद्धर्मिणः कुतः । साधनस्य व्यवच्छेदः प्रसिद्धत्वेन संमतात् ॥५॥
विदुषामप्रयोज्यत्वाद्धर्मिणः साध्यसिद्धये । तस्य साध्याविनाभावाभावादेवेति तन्मतं ॥ ६ ॥
हेतुः कथं प्रयोज्यः स्यात्केवलः स्वेष्टसिद्धये । साध्यस्यावचने तेनाविनाभावोप्रसिद्धितः ॥७॥
प्रस्तावाद्गम्यमानेन हेतोः साध्येन बुद्ध्यते । विद्वद्भिरविनाभावोऽनुक्तेनापीति चेन्न वै ॥८॥
प्रस्तावस्यार्थयोरिष्टानिष्टयोरविशेषतः । कार्थे हेतुः प्रयुक्तोऽयमिति ज्ञातुमशक्तितः ॥ ९ ॥
यद्येकमुखएव स्यात् प्रस्तावस्त्र्यात्मकं जगत् । कथमेतदिति प्रश्ने तदा हेतुः स तत्र चेत् ॥१०॥
न पृष्टविपरीतार्थे हेतोर्वचनसंभवात् । अत्र्यात्मकमिदं विश्वमिति स्वयमभीप्सितां ॥ ११ ॥
तत्र हेतोर्विरुद्धत्वनिश्चयात्साध्यता न चेत् । तथा त्र्यात्मकं सिद्धेस्तस्य स्यात्साध्यता कुतः ॥१२॥
यो ह्यग्नौ विरुद्धत्वं धूमवत्त्वस्य बुध्यते । सोऽग्नौ साध्ये कथं तस्य न विद्यात्सत्यहेतुतां ॥१३॥
न चैवं बुध्यमानस्य घटते प्रतिपाद्यता । प्रतिपादकवैयर्थ्येन हेतुस्तं प्रति केवलः ॥ १४ ॥
यत्पृष्टं प्रतिपाद्येन तत्र हेतुः प्रयुज्यते । यदाचार्येण तेनास्याविनाभावगतिस्तथा ॥ १५ ॥
भवत्येवेति चेत्साध्ये निर्देशोप्येवमागतः । प्रतिपादकृतः प्रश्नविशेषः कोन्यथास्य स ॥१६॥
उत्पादाद्यात्मकं विश्वं कुत एतद्धि निश्चितं । इति प्रश्ने प्रमेयत्वादिति हेतोर्वचस्यपि ॥१७॥
प्रसिद्धः साध्यनिर्देशः संबंधाद्रुपवर्णितः । एतैर्नैकनिर्देष्टुरिव भिन्नादपि स्फुटं ॥ १८ ॥
ततः संक्षेपतःसिद्धः सर्वेषामविगानतः । साध्यसाधननिर्देशमात्रकं न तु हेतुवाक् ॥१९॥
प्रत्यक्ष विशदं ज्ञानं प्रमाणं ज्ञानमित्यपि । अकलंकवचोपद्वत्साध्यसाधनसूचकं ॥ २० ॥
प्रत्यक्षं कल्पनापोढमभ्रांतमिति कीर्तिवाक् । सदकारणवन्नित्यमिति योगवचोऽपि च ॥२१॥
चैतन्य पुरुषस्य स्यात्स्वरूपमिति सांख्यवाक् । एवमादिपरैरिष्टं स्वेष्टसिद्धिनिबंधनं ॥२२॥
सत्सत्सदिति तद्वत्स्यात्पत्रवाक्यमनाकुलं । स्वसाध्यर्थाविनाभाविसाधनस्याभिधानतः ॥२३॥
उत्पादादित्रयात्मत्वमतरेण प्रमेयता । न हि क्वचित्प्रसिद्धास्ति प्रमाणबलतः सतां ॥२४॥
नोत्पादव्ययनिर्मुक्तमात्मादिद्रव्यमस्ति नैः । प्रमेयं नापि पर्यायो ध्रौव्यमुक्तोऽस्ति कश्चन ॥२५॥
द्रव्यपर्याययोर्भेदाभेदैकांतेऽनवस्थितेः । श्रीमत्समंतभद्रार्यैर्युक्तिविद्भिस्तथोक्तितः ॥ २६ ॥
द्रव्यपर्याययोरैक्यं तयोरव्यतिरेकत. । परिणामविशेषाच्च शक्तिमच्छक्तिभावतः ॥ २७ ॥
संज्ञासंख्याविशेषाच्च स्वलक्षणविशेषतः । प्रयोजनादिभेदाच्च तन्नानात्वं न सर्वथा ॥ २८ ॥

तत्र द्रव्यं तावदन्वयि तदेवेदमित्यबाधितप्रत्यभिज्ञासमधिगम्यं पर्यायो व्यावृत्ताकारस्वभावः स भेद-

---

१ सर्वथा भेदाभेदानयमंगीक्रियमाणे । २ पूर्वोक्तं सर्वे । ३ बौद्धा. । ४ विद्यमाना । ५ वस्तुनिः । ६ प्रमाणस्य । ७ स्वसंवेदने । ८ आदिशब्देन व्ययध्रौव्ययोर्ग्रहणं । ९ व्याप्तेरभावात् । १० तेषां बौद्धानां मतं । ११ अकथनेन । १२ अनुमानेन । १३ प्रमेयत्वादिलक्षणः । १४ बौद्धानां । १५ कुतो न कुतोपीतिभावः । १६ प्रतिपाद्यमाने । १७ उक्तविपर्यये । १८ साध्यस्य । १९ प्रतिपादनेन । २० गामानय शुक्लां दण्डेनेति नानावक्तृभिः कथ्यमानेऽपि साध्यसाधननिर्देशः स्यादिति भावः । २१ वादिनां । २२ अविवादात् । २३ धर्मकीर्तेर्वचः । २४ अस्माकं जैनाना । २५ कथंचिद् प्रमा । २६ अपृथक्करणभावात् । २७ द्रव्य । २८ पर्याय: । २९ तयोर्द्रव्यपर्याययोः । ३० पर्यायः ।

द्रव्यपर्यायसमधिगम्यः कथंचित्तयोरैक्यमव्यतिरेकात् ययोस्तु नैक्यं न तयोरव्यतिरेकः यथा हिमवद्विन्ध्ययोरव्यतिरेकश्च द्रव्यपर्याययोस्तस्मात्तयोरैक्यमिति केवलव्यतिरेकी हेतुः ननु चैक्यमव्यतिरेक एव स एव हेतुः कथमुपपन्नः स्यात्साध्यसमत्वादिति न मंतव्यं कथंचित्तादात्म्यस्यैक्यस्य साध्यत्वात् परस्परमशक्यविवेचनत्वस्याव्यतिरेकस्य साधनत्वात् तस्य साध्यसमत्वाभावात् परस्परव्यतिरेचनं व्यतिरेकः, तदभावस्त्वव्यतिरेकः स च शक्यविवेचनमेवेति कथं साध्यसमत्वं नैवमसिद्धो हेतुः कस्यचिज्जीवादिद्रव्यस्य स्वपर्यायेभ्यो ज्ञानादिभ्यः परद्रव्यपर्यायांतराणि स्वपर्यायाणां च ज्ञानादीनां द्रव्यांतरं नेतुमशक्यत्वस्य परस्परमशक्यविवेचनत्वस्य द्रव्यपर्याययोः सुप्रसिद्धत्वात् अन्यथा ज्ञानादिपर्यायाणां जीवपर्यायत्वायोगात् जीवादिद्रव्यत्वस्य च तद्द्रव्यत्वविरोधात् ननु सत्यपि द्रव्ये तत्पर्यायाणामुत्पादात् उत्पन्नानां च विनाशात् कथमशक्यविवेचनत्वं सिद्धमिति तु न शकनीयं पर्यायाणामुत्पादविनाशाभावे पर्यायत्वायोगात् तेषामुत्पादव्ययलक्षणत्वात् द्रव्यस्य ध्रौव्यलक्षणत्ववत् ॥

समुदेति विलयमृच्छति भावो नियमेन पर्ययनयस्य नोदेति नो विनश्यति भावनयालिंगितो नित्यं ॥

इति वचनात् । न च कालाभेदोऽशक्यविवेचनत्वं एककालवर्तिनां नानार्थानामतिप्रसंगात् ततः कालाभेदे सत्यपि द्रव्यपर्याययोर्नाशक्यविवेचनत्वं यथोक्तलक्षणं विरुध्यते । देशाभेदोऽशक्यविवेचनमित्यपि नोक्तं वातातपादीनामपि तत्प्रसंगात् शीतजीयो देशाभेदोऽशक्यविवेचनत्वमिति चेत्तर्हि द्रव्यपर्याययोस्तत्कथमसिद्धं ॥ ननु पर्यायाणां रूपादीनां घटादिद्रव्यदेशत्वात् घटादिद्रव्यस्य तु स्वारंभकावयवदेशत्वात् तयोः पदार्थान्तरत्वसिद्धिरिति चेन्न प्रमाणाभावात् गुणगुणिनौ क्रियाक्रियावंतौ जातितद्वंतौ विशेषतद्वंतौ अवयवावयविनौ च परस्परतः पदार्थांतरभूतौ भिन्नप्रतिभासत्वात् यौ यौ भिन्नप्रतिभासौ तौ तौ परस्परतः पदार्थांतरभूतौ यथा घटपटौ भिन्नप्रतिभासौ तौ इत्यनुमानसद्भावान्न प्रमाणाभाव इति चेन्न अस्यानुमानस्य विरुद्धत्वात् इष्टविरुद्धस्य कथंचिदर्थांतरत्वस्य साधनात् कथंचिद्भिन्नप्रतिभासत्वस्य कथंचिदर्थांतरेण व्याप्तत्वात् सर्वथा भिन्नप्रतिभासत्वस्य हेतुत्वे पुनरसिद्धो हेतुः दृष्टांतश्च साध्यसाधनविकलः प्रतीयते घटपटयोः सर्वथार्थांतरत्वस्य साध्यस्य सर्वथाभिन्नप्रतिभासत्वस्य च साधनधर्मस्याप्रातीतिकत्वात् । सद्द्रव्याद्यात्मना तयोरभिन्नत्वादभिन्नप्रतिभासमानत्वाच्च । ननु च सद्द्रव्याद्यात्मनोऽपि घटपटाभ्यां भिन्नत्वात् कथं तेन तयोरभेदः स्यात् । अभिन्नप्रतिभासत्वं वा, सत्त्वं हि परसामान्यं सत्स्वभावः द्रव्यत्वं चापरसामान्यं द्रव्यस्वभावः तथा पार्थिवत्वमपरोऽपि इति कथमसौ सतोऽनार्थांतरभूतः स्यादिति कश्चित् सोऽपि न युक्तवादी सत्त्वादर्थांतरत्वे तयोरसत्त्वप्रसंगात् द्रव्यादित्वभावाद्यात्यंतभेदे तयोरद्रव्यादिप्रसक्तेः । सत्तासंबंधात् तयोः सत्त्वं द्रव्यत्वसंबंधात् द्रव्यत्वोपपत्तेः पार्थिवत्वादिसंबंधात्पार्थिवत्वादिव्यपदेशानामदोष इति चेत् कथमसतः स्वयमद्रव्यस्यापार्थिवादेश्च । सर्वदात्यंतभिन्नसत्त्वादिसंबंधादपि सदादिरूपता युक्ता खरविषाणादेरपि तत्प्रसंगात् । प्रागसदादेः सत्त्वादिसंबंधात् सदादिरूपत्वे प्रध्वंसाभावस्य स्वकारणव्यापारात्प्रागभूतस्य तदनंतरं भवतः सत्ताभिप्रसंगः । तस्य तदापि सत्तादिसंबंधासंभवात् न तत्प्रसंग इति चेत्तदिदं आत्पयिकृमितं, आक्षेपस्यैव परिहारतया व्यवहारात् प्रागसतः सत्तासंबंधाभ्युपगमेऽपि प्रध्वंसाभावस्य सत्तासंबंधः कस्मान्न भवति, ततः सत्त्वं चेन्नाश्रयः तस्य सत्तासंबंधासंभवात् इति स एव परिहारः कथमन्यैरभिधीयते साध्यमेव च साधनं पुनस्तस्य सत्तासंबंधाभावः सत्तासंबंधाभावादिति पुनः सत्तासंबंधलक्षणसत्तामात्रं सत्तासंबंधाभावादिति वा यदि पुनः प्रागसत्त्वादविशेषेऽपि घटपटयोरेव सत्तासंबंधः तन्निमित्तं च तस्य तथा

---

१ द्रव्यपर्याययोः । २ परस्परमशक्यविवेचनत्वात् । ३ बौद्ध । ४ अनयोः धर्मिद्रव्ये मार्गेण दृश्यते मतः । ५ जैना । ६ दृष्टव्यं । ७ बौद्ध । ८ ध्रौव्यवत् । ९ पटस्पर्शनं । १० युक्तिमत् । ११ कार्ये मतः ध्रौव्ये न तु कौलिक. १२ जैन । १३ पर । १४ तथा सति सत्त्वादिसंबंधे । १५ तयोर्द्रव्यपर्याययोर्भिन्नत्वसिद्धेः । १६ वासितत्व । १७ असतो क्रियमाणे । १८ इदं यदि संबंधादिति द्रव्यं तदन्येन । १९ भिन्नत्वेऽपि । २० भावितत्वं स्यादिसर्वं । २१ अभावविधान । २२ आक्षेपभाक्त्व । २३ सम्बन्धेन । २४ घटद्रव्यपटादिभ्यः । २५ सत्तासम्बन्धसादिकत्व । २६ अपि शब्देन द्रव्यपार्थिवत्वादिदर्थं । २७ असम्प्रत्याप्रतिपेक्षतैव । २८ प्रतिपादनादिसमपि पाठः असत्प्रत्यय प्रतिपादनात् । २९ येन हेतु इति मतं वर्तते । ३० पुनः तत्सादविशेषेऽपि पाठः ।

प्रतीतेः न पुनः प्रध्वंसाभावस्य तदभावादिति मतं तदा कथंचित्सत्त्वादितादात्म्यात् सत्त्वादिव्यवहारो घटपटयोरिति नैकांतेन सत्वादि ततो भिन्नं येन सद्द्रव्यात्मना घटपटयोरभेदः कथंचिदभिन्नप्रतिभासत्वं वा न स्यात् साध्यसाधनवैकल्यं वा दृष्टांतस्य ततो न द्रव्यपर्यायोर्भेदैकांतसाधनं निरवद्यमस्ति यतस्तयोः पदार्थांतरत्वसिद्धौ शास्त्रीयदेशभेदलक्षणशक्यविवेचनत्वोपपत्तेः अशक्यविवेचनत्वमव्यतिरेको हेतुरसिद्धः शक्येत नचायमनैकांतिको विरुद्धो वा सर्वदा विपक्षे वृत्त्यभावात् इति सिद्धत्वेचातो हेतोः कथंचिद्द्रव्यपर्याययोरैक्यं तथा "द्रव्यपर्याययोरैक्यं परिणामविशेषात् ययोस्तु नैक्यं न तयोः परिणामविशेषः, यथा सह्यविंध्ययोः परिणामविशेषश्च द्रव्यपर्याययोः तस्मादैक्यमित्यपि व्यतिरेकीहेतुः नंनु च कोयं परिणामविशेषोनाम यदि पूर्वविनाशादुत्तरोत्पादस्तदा वाद्यसिद्धः निरन्वयविनाशात्यंतापूर्वोत्पादयोः स्याद्वादिनामनिष्टत्वात् । अथ पूर्वस्य तिरोभावादुत्तरस्याविर्भावस्तदापि वाद्यसिद्धः सर्वथासतस्तिरोभावाविर्भावमात्रानभ्युपगमात् एतेन स्वाश्रयाद्भिन्नस्वभावः समवायात्तत्र वर्तमानः परिणामविशेष इति वाद्यसिद्धः प्रतिपादितः तेषां तथाप्यनभ्युपगमात् अथ पूर्वापरस्वभावत्यागोपादानान्वितस्थितिर्लक्षणस्तदा प्रतिवाद्यसिद्धः सौगतसांख्ययौगानां तथाभूतपरिणामविशेषासिद्धेः इति कश्चित्सोपि न युक्तवादी पूर्वापरस्वभावत्यागोपादानान्वितस्थितिलक्षणस्य परिणामविशेषस्य प्रमाणतः सिद्धत्वात् । तथा हि सर्वं वस्तु यथोक्तपरिणामविशेषभाक् सत्वात् सर्वथाप्यपरिणामिनि सौगतादीष्टपरिणामिन परिणामिनि च सत्वविरोधात् तद्विरोधश्च अर्थक्रियाव्याघातात् तद्व्याघातश्च क्रमयौगपद्यासम्भवात् तदसंभवश्च निरन्वयविनश्वरनिरंशैकांते देशकालकृतक्रमस्य नानाकार्यकरणशक्तिनानात्वनिबंधनयौगपद्यस्य च विरोधात् सर्वथा सदात्मककूटस्थवत् परस्परतोऽत्यंतभिन्नधर्मधर्मिमात्रवच्च नह्यत्र देशकृतः क्रमः पिपीलिकादिवत् नापि कालकृतो वा बीजांकुरादिवत् संभवत्येकस्यानेकदेशकालवर्तिनोरनभ्युपगमात् यो यत्रैव स तत्रैव यो यदैव तदैव सः "न देशकालयोर्व्याप्तिर्भावानामिह विद्यते" इतिवचनात् ननु च क्षणिकैकस्वलक्षणापेक्षया देशकालव्याप्त्यभावात् भावानां माभूत् देशकालकृतः क्रमः सकृदेकस्यानेकस्वभावापेक्षया यौगपद्यवत् संतानापेक्षया तु स्यात् तस्यानेकसहकारिकालापेक्षया अनेककार्यकरणयौगपद्यवत् इति चेन्न संतानसमुदाययोरेव क्रमयौगपद्याभ्यामर्थक्रियाकारित्वात् वस्तुत्वसिद्धिप्रसंगात् स्वलक्षणस्यावस्तुतापत्तेः । स्यादाकूतं यदन्वयव्यतिरेकानुविधानात्क्रमशः कार्योत्पत्तिस्तत्स्वलक्षणं क्रमशः कार्यकारि यथा कस्यचिज्जाग्रद्विज्ञानं क्रमशः स्वप्नज्ञानप्रबोधज्ञानादिकारणं किंचित्तु युगपत्कार्यकारि यदन्वयव्यतिरेकाभ्यां यौगपद्येन कार्योत्पत्तिः यथा प्रदीपस्वलक्षणं तैलशोषणांधकारापनयकारणं । न चैवमेकस्यानेकस्वभावापत्तिस्तस्य तादृशैकस्वभावत्वात् इति तदसत् कूटस्थस्याप्येवं क्रमाक्रमकार्यकारित्वोपपत्तेः शक्यं हि वक्तुं शाश्वतिको भावः स्वान्वयव्यतिरेकाभ्यां क्रमेणाक्रमेण वानेकं कार्यं प्रादुर्भावयन् तथा तन्निमित्त । नचानेकस्वभावत्वं तस्य तथाविधैकस्वभावत्वात् ॥ नित्यस्य कथं व्यतिरेक इति चेत् क्षणिकस्य कथं । सकलकालकलाव्याप्तेरिति चेत् नित्यस्यापि सकलदेशाव्याप्तेर्व्यतिरेकोऽस्तु । ननु नित्याद्भिन्नकार्यस्योत्पत्तौ

---

१ आदिशब्देन द्रव्यत्वपार्थिवत्वयोर्ग्रहणं । २ कुतो न स्याद स्यादेव । ३ सर्वथा भेदनियमे साधनं सर्वथा न घटते इति भाव. । ४ स्वरूपेण । ५ घटपटयोर्द्रव्यपर्याययोर्वा । ६ विवेचनस्य तदुपपत्तौ । ७कुतः शक्येत न कुतोऽपि । ८उत्पाद व्ययध्रौव्यात्मकत्वात् । ९ बौद्धः । १० चेत् । ११ (वादिना) जैनानामसम्मतः । १२ जैनानामभिमतः । १३ न्यायेन १४ घटपटादेः । १५ सौगतसांख्ययौगोक्तप्रकारेण परिणामस्यानंगीकारात् । १६ परिणामविशेषश्चेत् । १७ जैनोक्तलक्षणपरिणामविशेषस्यासिद्धेरित्यर्थः । १८ पूर्वापरस्वभावपर्यायसंग्रहं ग्राह्यं । १९ उत्पादव्ययध्रौव्यरहिते । २० आदि शब्देन सांख्ययौगयोर्ग्रहणं । २१ खरविषाणादौ । २२ निरन्वयविनाशात्यंतापूर्वोत्पादः पूर्वस्य तिरोभावादुत्तरस्याविर्भावः स्वाश्रयाद्भिन्नस्वभावः समवायात्तत्र वर्तमान. परिणामविशेष इति लक्षणे निरंशः क्षणिकः । २३सद्रूपैकरूपतया कालत्र्यापि कूटस्थतत्त्वं सांख्यापेक्षया ग्राह्यं । २४ सौगतादीष्टतत्त्वस्य । २५ कारणसमुदायापेक्षया । २६ शुद्धवस्तुनः । २७ बौद्धः । २८ स्वलक्षणं । २९ भवतीत्यध्याहारः । ३० स्वलक्षणस्य । ३१ क्रमयौगपद्याभ्यामर्थक्रियाकारित्वलक्षणः । ३२नित्यस्य ३३ क्षणिकाक्षणिकवादिनोः परस्परं वदतोः ३४ स्वलक्षणं यथा । ३५ बौद्धः । ३६ असत्त्वसद्भावोव्यतिरेकः । ३७ व्यतिरेक इत्याध्याहारः । ३८ जैनः । ३९ बौद्धः ।

देशव्यतिरेकस्यापि न संभवः तदनुत्पत्तौ तु तद्देशस्यैव कार्यस्य सर्वदोत्पत्तेः प्रतीतिविरोध इति चेत् तर्हि क्षणिकाभिमतकालस्य कार्योत्पादे व्यतिरेकाभावस्तदभाव एव तद्भावात्, तदभिमतकालस्योत्पादे कार्यत्वविरोधः सर्वसमयवर्तित्वात्स्यात्मवत्। क्षणिकलक्षणे स्वकाले सति भवत् कालान्तरेऽपि कार्यस्यान्वयवत् तदा तस्मिन्नसत्यभवतो व्यतिरेकः सिद्ध्यतीति चेत् तर्हि नित्येऽपि स्वदेशे सति देशान्तरेऽपि भवत् कार्यस्यान्वयवत् तत्राप्यसति तस्यामवतो व्यतिरेकः सिद्ध्येत्। नन्वेवमनभिमतदेशस्यापि कार्यस्य जन्म प्रसज्यते नित्यवादिन क्षणिकवादिनोऽपि तदनभिमतकालस्य जन्मप्रसंगात्। ततः स्वयोग्याभिमतकालस्योत्पत्तौ नित्येऽपि स्वयोग्याभिमतदेशस्योत्पत्तेरखंडं प्रबंधेन सर्वथा क्षणिकेतरवादिनोः परस्परेणैनातिशयात् क्षणिकैकान्तस्य सत्यान्यैव प्रपंचतो निराकरणाच्च न पूर्वापरस्वभावविनाशोत्पादमात्रेण परिणामेन परिणामि सर्वं वस्तु नाप्यविनाभावमात्रेण नित्यैकान्ते तदनुपपत्तेः कूटस्थस्याविर्भावतिरोभावयोरपि तदवस्थाविरोधात् अनित्यतानुपगमात् तदवस्थयोस्तदनुपपत्तौ ततस्तयोर्भेदैकान्तस्यानतिक्रमात् भेदे नित्यस्यावस्थेति व्यपदेशासिद्धिः संबंधाभावात्। अवस्थावस्थावतोरभाव एव संबंध इति चेत् न तस्य भेदैकान्ते सह्यविंध्यवदघटनात्। एतेन द्रव्यस्य भिन्नेन गुणादिना परिणामेन परिणामित्वं प्रत्याख्यातं गुणादिद्रव्ययोः समवायस्यापि भेदैकान्ते तद्वदनुपपत्तेरविशेषात्। देशाभेदात्तयोः संबंध इति चेन्न वातातपयोरात्माकाशयोर्वा तत्प्रसंगात् कालभेदादुभयाभेदाच्च स तयोरित्यस्याप्यनेनापास्त। तयोरविष्वग्भावादुपपन्नः संबंध इति चेत् स यदि देशकालाभेद एव तदा स एव दोषः ततोऽन्यश्चेत् स्वभावाभेदः, प्रतिभासाभेदो, व्यपदेशाभेदो, वा न तावत्स्वभावाभेदः संभवति द्रव्यस्य गुणादेश्च भिन्नस्वभावत्वोपगमात्। प्रतिभासव्यपदेशाभेदोऽपि न युक्तः, तस्यासिद्धत्वात्। कथंचित्तादात्म्यमविष्वग्भाव इति चेत् स्याद्वादमतसिद्धिः सैवास्तु गत्यंतराभावात् इति यथोक्तपरिणामेनैव परिणामित्वं सत्त्वस्य व्यापकं सिद्धं ततस्तस्यैव साधनमिति सिद्धः परिणामविशेषो हेतुः द्रव्यपर्याययोः कथंचिदैक्यं साधयति। यथैव हि द्रव्यस्य द्रव्यरूपतया स्थितिः, पूर्वापरपर्यायरूपतया तु नाशोत्पादौ परिणामविशेषस्तथा पर्यायस्यापि स्वरूपेणात्मलाभो विनाशश्च द्रव्यरूपतया तु स्थितिरिति तल्लक्षणः परिणामविशेषोऽस्त्येव। तथा द्रव्यपर्याययोः कथंचिदैक्यं शक्तिमच्छक्तिभावात् ययोस्तु नैक्यं न तयोः शक्तिमच्छक्तिभावः यथा सह्यविंध्ययोः शक्तिमच्छक्तिभावश्च द्रव्यपर्याययोरिति व्यतिरेकी हेतुरन्यथानुपपत्तिलक्षणः साध्यं साधयति। शक्तिमद्धि द्रव्यं शक्तयः पर्यायाः प्रतीतास्तत्र तद्भावः शक्तिमच्छक्तिभावः सिद्धोऽन्यथानुपपत्त्यात्मको हेतुः। न चान्यथानुपपत्तिरसिद्धा कथंचिदैक्यमंतरेण द्रव्यपर्याययोर्भेदैकान्ते तदभेदैकान्ते च शक्तिमच्छक्तिभावस्यासंभवात्। व्यवहारविवेचनलक्षणपरिणामविशेषवत्। तथा द्रव्यपर्याययोः कथंचिन्नानात्वं संज्ञासंख्यालक्षणप्रयोजनप्रतिभासभेदात् घटपटवत्, शक्रपुरंदरादिसंज्ञाभेदेन कलत्रं दारा इत्यादिसंख्याभेदेन ज्ञानादिस्वलक्षणभेदेन तापशोषादिप्रयोजनभेदेन स्पष्टास्पष्टादिप्रतिभासभेदेन च व्यभिचारी हेतुरिति चेन्न तस्यापि कथंचिद्भेदमंतरेणानुपपद्यमानत्वात् सर्वस्यैकानेकस्वभावत्वविनिश्चयात् संज्ञेयसंख्येयलक्ष्यप्रयोज्यप्रतिभास्यस्वभावभेदार्पणायामेव संज्ञादिभेदव्यवहारसिद्धेरन्यथातिप्रसंगात् ततोऽन्वयी द्रव्यपर्याययोः कथंचिद्भेदसाधन कथंचिदैक्यसाधनवत् नैवं विरोधवैयधिकरण्यादिदूषणं, प्रमाणसिद्धयोः कथंचिद्भेदाभेदयोस्तदगोचरत्वात् कल्पितसर्वथा भेदाभेदयोरेव विरोधादिविषयतयावसायात्। ननु च द्रव्यपर्याययोर्यमात्मानमाश्रित्य भेदो यं चाश्रित्याभेदस्तौ यदि तयोर्भिन्नौ तदा भेदएव न हि भिन्नात्मभिन्नमभिन्नं नाम नानाभाजनस्थक्षीरादभिन्नक्षीरान्तरवत् अथाभिन्नौ तथापि न भेदः तदुक्तं—

याभ्यामात्मानौ समाश्रित्य भेदाभेदौ द्वयोस्तयोः। तावभिन्नौ ततः स्यातां यदि भेदस्तदा न किम् ॥१॥
किं भिन्नौ यदि तौ भेदः सर्वथा केन वार्यते। भिन्नादभिन्नयोर्भेदो भिन्नार्थादभेदवत् ॥२॥

---

१ भिन्नस्थितवत्सैव। २ भिन्नः कालो यस्य। ३ कारणाभावएव। ४ कार्यसद्भावात्। ५ कारणाभिमतकालस्य। ६ कार्यकारणयोः। ७ क्षणिकस्वलक्षणवत्। ८ अनुत्पद्यमानस्य। ९ उत्पद्यमानस्य। १० भिन्नो देशो यस्य कार्यस्य तस्य। ११ विस्तरेण। १२ अविकारित्वात्। १३ देशभेदमात्रकारणात्। १४ एकरूपतया तु यः कालव्यापी स कूटस्थः। १५ व्यासावर्तितमानानां। १६ कूटस्थस्याविर्भावतिरोभावौ भिन्नाभिन्नौ वा।

इति स एवमप्युपालंभो वस्तुनि न भवत्येव स्वमिथ्याविकल्पयोरेव तत्संभवात् वस्तुनो द्रव्यपर्यायात्मनोर्जात्यंतरस्य तदंशयोर्द्रव्यपर्याययोः कथंचिद्भेदाभेदात्मनोः प्रतीतिसिद्धत्वात् नच तथा प्रतीतिः मिथ्या, बाधकस्य तद्विपरीतग्राहिणः प्रमाणस्य कस्यचिदप्यसंभवात् तत्रानवस्थादेरनवतारात् तथा हि द्रव्यपर्याययोर्यमात्मानं द्रव्यस्वभावमाश्रित्याभेदः स्याद्वादिनां संमतः स एवाभेदो न पुनरन्योत्रायं पर्यायमात्मानमाश्रित्य तयोर्भेदो व्यवह्रियते सएव पर्यायात्मा भेदः ततोनापर इत्याहुरनेकांतवादिनः ततो नैवाभेदैकांतः प्रसज्यते भेदैकांतो वा तथाप्यधायि इत्येवमप्युपालंभो न संभवति वस्तुनि तथा प्रतीतिसिद्धत्वाद्बाधकस्याप्यसंभवात् ।

द्रव्यपर्यायोश्चात्र भेदः स्याद्वादिनां मतः । द्रव्यात्मानं यमाश्रित्य स एवाभेद इत्यपि ॥१॥
पर्यायात्मानमाश्रित्य पंचभेदः प्रकीर्त्यते । स एव भेद इत्याहुस्तत्तदेकांतता कुतः ॥२॥

इति तत एव च प्रतीतिसिद्धत्वाद्बाधकाभावादपि शीतोष्णस्पर्शवत् द्रव्यपर्याययोर्विरोधो ध्वस्तः स्यात् तद्वद्वैयधिकरण्यं च ध्वस्तं स्यात् तत एवानवस्था ध्वस्ता स्यात् द्रव्यरूपेणाभेदस्यैव पर्यायरूपेण भेदस्यैवोभयस्वभावे वस्तुनि व्यवस्थितत्वात् सुनयार्पितैकांतावधारणस्यापि अनेकांताप्रतिघातत्वात् । ननु च प्रमाणार्पणादनेकांतएव नयार्पणाच्चैकांतएवेत्यप्येकांतएव प्रसक्त इति चेन्न तस्याप्यपरनयप्रमाणविषयतायामेकांतात्मकत्वात् अव्यवस्थितानेकांतोपगमात् आकांक्षाक्षयादेव व्यवस्थानसिद्धेरनवस्थादोषाभावात् । संकरश्च ध्वस्तः स्यात् तयोर्युगपत्प्राप्त्यभावात् । व्यतिरेकश्च परस्परविषयगमनाभावात् । प्रतिनियतस्वरूपत्वात्संशीतिरपि ध्वस्ता । तथानयोर्नयप्रमाणाभ्यां सुनिश्चितत्वात् तथैवाप्रतिपत्तिरभावश्च ध्वस्तः स्यात् यौगाभिमतसामान्यविशेषवत् चित्राद्वैतवादिनश्चित्रवेदनवत्, सांख्यस्य सत्वरजस्तमोमयैकप्रधानवत् चित्रपटवच्चापरेषां नैकस्यानेकत्वं विरोधं भजते नापि वैयधिकरण्यादिदोषमिति प्रतिपत्तव्यं । तदुक्तं—

तत एव विरोधोऽत्र विभिन्नाश्रयतापि वा । अनवस्थाद्यपि ध्वस्तं स्यात्सामान्यविरोधवत् ॥१॥
चित्रवेदनवच्चापि सत्वाद्यात्मप्रधानवत् । चित्रवस्त्रवदेकस्यानेकत्वं न विरोधभाक् ॥ २ इति

एवं च न सत्सत्त्वलक्षणं प्रमेयत्वं नित्यैकांतादिषु क्वचिदपि सर्वथैकांते संभवति प्रमाणेनेव नयैरपि जात्यंतरस्यानेकांतात्मनो वस्तुनः प्रवेदनात् । नित्यत्वाद्येकांतप्रवेदने तत्प्रतिपक्षाऽनित्यत्वादिधर्माणामनिराकरणात् तत्र तेषामपि गुणीभूतानां सद्भावात् एतावतैव विपक्षे व्यावृत्तिनिश्चयेन हेतोः प्रकृतस्यान्यथानुपपन्नताप्रधानलक्षणभूता सिद्धा । ततो युक्तं साध्यसाधनवचनं संक्षेपतः पत्रवाक्ये केवलस्य हेतोरति संक्षेपतो प्रयोगाप्रयोगात्, सर्वथाविचारासहत्वात्, साध्यनिर्देशसहितस्यैव हेतोः प्रयोगार्हत्वसमर्थनात्, तदुक्तं—

तथा च न प्रमेयत्वं ध्रौव्यैकांतादिषु क्वचित् । नयैरपि गुणीभूतानेकांतस्य प्रवेदनात् ॥
सिद्धा चैतावता हेतोरन्यथानुपपन्नता । प्रधानलक्षणं युक्ता साध्यसाधनवाक् ततः ॥ इति

विशेषाश्रयणात्कस्य कस्यावयवस्य वचनं पत्रे प्रयोगयोग्यमिति उदाह्रियते ।

साध्यधर्मविशिष्टस्य धर्मिणः साधनस्य च । वचः प्रयुज्यते पत्रे विशेषाश्रयतो यथा ॥
स्वांतभासितभूत्याद्यत्र्यंतात्मतदुभांतभाक् । परांतद्योतितोद्दीप्तमितीतः स्वात्मकत्वतः ॥ इति

अंत एव ह्यांतः स्वार्थिकेऽणि भवति वानप्रस्थादिवत् प्रादिपाठापेक्षया सोरांतः स्वांतः—उत् तेन भासिता द्योतिता भूतिरुद्भूतिरित्यर्थः सा आद्या येषां ते स्वांतभासितभूत्याद्यास्तेच ते अताश्च ते उद्भूतिविनाशध्रौव्यधर्मा इत्यर्थः, त एवात्मानः तान् तनोति इति स्वांतभासितभूत्याद्यत्र्यंतात्मतदिति साध्यधर्मः उभांता वाक् यस्य तदुभांतभाक् विश्वमिति धर्मो तस्य साध्यधर्मविशिष्टस्य निर्देशः उत्पादादित्रिस्वभावव्यापि सर्वमिति यावत् । परांतो यस्येति परांतः प्रःसएव द्योतितं द्योतनमुपसर्ग इत्यर्थः तेनोद्दीप्ता सा चासौ मितिश्च तामितः स्वात्मा यस्य तत्परांताद्योतितोद्दीप्तमितीः तत्स्वात्मकं प्रमितिः प्राप्तस्वरूपमिति यावत् तस्य भावस्तत्त्वं प्रमेयत्वं तस्माचतः प्रमेयत्वात् इत्यर्थः प्रमाणविषयस्य प्रमेयत्वादिति एतस्य साधनस्य चान्यथानुपपन्नत्वनियमनिश्चयलक्षणस्योक्तन्यायेन समर्पितस्य वचनं यत्रेति विशेषाश्रयेण प्रयुज्यते, दृष्टांतोपदर्शनाभावेऽपि हेतोर्गमकत्वसमर्थनात् । तथा त्रयश्चत्वारः पंच पक्षादयो वा पत्रवाक्येऽवयवाःस्युः नियमस्याव्यवस्थानादित्येतदभिधीयते ।

चित्रमद्वैतराणीयमारेकांतात्मकत्वत । यदित्थं न तदित्थं न यथा किंचिदिति त्रय ॥१॥
तथाचेदमिति प्रोक्तश्चत्वारोऽवयवा मता । तस्मात्तथेति निर्देशे पंच पत्रस्य कस्यचित् ॥२॥
प्रभादयोऽपि चैव स्युर्नियमस्याप्यवस्थिते । साधर्म्येतरदृष्टांताभिधाने च यथा क्वचित् ॥३॥

चित्रमेकानेकरूपं तदततीतिचित्रात् एकानेकस्वरूपव्याप्यनेकातात्मकमित्यर्थ सर्वविषयदित्यादि सर्वनामपाठापेक्षया यदतो विश्वशब्द । यदततोस्येसि यदंस इतिसूत्रे, यदंतेन राणीय शब्दनीय विश्वमित्यर्थ तदनेनानेकांतात्मकं विश्वमिति पक्षनिर्देश कृत, आरेका संशय सांतोस्येत्यारेकांत प्रमेय प्रमाणप्रमेयसंशयेत्यादिपाठापेक्षया स आत्मा स्वभावो यस्य तदारेकांतात्मकं तस्य भावस्तत्त्वं तस्मादिति साधनधर्मनिर्देश यदित्थं न भवति यच्चित्रात्म भवति तदित्थं न भवति आरेकांतात्मकं न भवति यथा किंचिन्न किंचित् यथाचार्किचित् सर्वथैकांतात्मकं तत्त्वं परान्युपगतमिति त्रयोऽवयवा पत्रे प्रयुज्यंति तथा चेदं प्रमेयात्मकं चेद् विश्वमिति पक्षधर्मोपसंहारवचने चत्वारोऽवयवा प्रयोगेऽमी दृष्टा तस्मात्तथानेकांतव्यापीति निर्देशे पंचावयवा । पत्रवाक्यस्य कस्यचित् प्रभादयोपि चैव प्रतिपाद्या प्रतिपाद्याशयवशात् स्यु तेषामियत्तया चावधारणस्याभावात् तत्र साधर्म्यदृष्टांतस्य वैधर्म्यदृष्टांतस्य च गम्यमानस्यापि वचने षडवयवा स्यु । यथानित्य शब्द कृतकत्वात् यत्कृतकं तदनित्यं दृष्टं यथा घटः यत्पुनर्नित्यं तदकृतकं दृष्टं यथाकाशं कृतकश्च शब्द तस्मादनित्य इति अत्रैव साधर्म्योपनये वैधर्म्योपनये च कृतकः शब्द, अकृतकस्तु न भवतीति प्रयुज्यमाने सप्तावयवा स्यु तस्मादनित्यो नित्यस्तु न भवति इति निगमनवचनेऽष्टौ, अनित्य शब्दो न तु नित्य, इति प्रतिज्ञाद्वयवचने नवावयवा स्यु कृतकत्वादकृतकत्वाभावादिति हेतुप्रयोगे दशापि सूयंते गम्यमानावयवप्रयोगे पुनरुक्तदोषाभावात्, प्रतिज्ञाद्यवयवप्रयोगवत् पक्षधर्मोपसंहारवद्वा दुराशंकाव्यवच्छेदस्य फलस्य सद्भावाविशेषात्, सर्वत्र निष्फलत्वायोगात्, तथाविधप्रतिपाद्याशयविशेषसंभवात्, यतश्चैव तस्मात्साध्याविनाभूतस्य साधनस्योपदर्शनं प्रमाणसिद्धं तदभावे साध्यप्रसिद्धे, पंचावयवाद्युपदर्शनं तु परेषां न प्रमाणसिद्धं बोध्यानुरोधमात्रादेतदुपदर्शनात् एवं च नैकांतवादिनां प्रसिद्धावयवं वाक्यं संभवति यत् पत्राख्यां लभेत तदुक्तं—

तत साध्याविनाभूतसाधनस्योपदर्शनं । प्रमाणसिद्धमेतस्याभावे साध्यामसिद्धित ॥ १ ॥
बोध्यानुरोधमात्रात्तु शेषावयवदर्शनात् । परेषां न प्रमाणेन प्रसिद्धावयव वच इति ॥ २ ॥

किंच यन्मते वर्णा अपि न व्यवतिष्ठंते पदान्यपि च तस्य वाक्यं कुत प्रमाणात् सिद्ध्येत् यत् पत्रलक्षणेन यथोक्तेन समन्वितं स्यात् । ननु यौगानां वर्णादयो व्यवस्थिता एव आकाशगुणत्वेन शब्दानामभ्युपगमात् तद्बाधकाभावादिति न संभाव्यं तथा बाधकसद्भावात् किं तद्बाधक इति चेदुच्यते नाकाशगुण शब्द बाह्येंद्रियज्ञानज्ञानविषयत्वात् य एव सएव यथा स्पर्श तथा च शब्दस्तस्मान्नाकाशगुण शब्द इति नाम्यथानुपपत्तिमन्य साधनं । गगनगुणत्वे शब्दस्य तदनुपपत्ते परममहत्त्वादिवत् । घटाकाशसंयोगादिना व्यभिचारीदं साधनमिति चेन्न बाह्येंद्रियज्ञानविषयत्वासिद्धे अतींद्रिययोरिवासींद्रियेंद्रियकयोरपि संयोगस्य विभागादेश्च वा तदघटनात्, अन्यथातिप्रसंगात् तदुक्तं—

वर्णा न व्यवतिष्ठंते पदान्यपि च यन्मते । तस्य वाक्यं कुत सिद्ध्येत् यत्पत्र लक्षणान्वितं ॥१॥
न शब्द खगुणो बाह्यकरणज्ञानगम्यत । स्पर्शवत् खगुणस्यैवं प्रमाणान्याहतत्वत ॥२॥ इति

न च मीमांसकस्यापि सर्वगतामूर्तद्रव्यनिरंशकात्मको वर्णो युज्यते तस्य बाह्येन्द्रियग्राह्यस्वभावत्वात् घटादिवत् । नाकाशेन हेतोर्व्यभिचार तस्य बाह्येंद्रियाग्राह्यस्वभावत्वात् कालादिवत् सुषिरस्याप्याकाशस्यानुमेयत्वात् तत्र मूर्तद्रव्यस्याभावे कस्यचिदमूर्तद्रव्यस्य सिद्धे तुच्छस्याभावस्याघटनात्, निराश्रयस्य गुणादेरनुपपत्ते परिशेषादाकाशस्य साधनात् । शुभ्रमाकाशं श्याममेतं चेदमिति प्रत्ययाच्चाक्षुषमाकाशमिति चेन्न आलोकांधकारयोराकाशत्वोपचारात् तथा प्रत्ययस्य भावात् तत्र घनद्रव्याभावेऽस्य तदुपचारहेतुत्वात् तयोरेवाकाशद्रव्यत्वोपगमे समतविरोधात् न चान्यत्किंचित्सर्वगतामूर्तनिरंशकात्मकं द्रव्यं बाह्येंद्रियग्राह्यस्वभावं दृष्टं येन व्यभिचारीदं साधनं स्यात् तत पटवत् तथा शब्द । तदुक्तं—

न च सर्वगतामूर्तनित्यैकात्मात्र युज्यते। वर्णो वाह्येंद्रियग्राह्यस्वभावत्वाद् घटादिवत् ॥१॥ इति

वर्णव्यतिरिक्तं पदं वाक्यं वा स्फोटाख्यमित्यपि न संभवति ग्राहकाभावात् अर्थप्रतिपत्त्यन्यथानुपपत्तिग्राहिकेति चेन्न तस्यास्तत्त्वतः कथंचिद्वर्णात्मकपदवाक्यहेतुत्वोपपत्तेः परोपगतस्फोटस्यानभिव्यक्तस्यार्थप्रतिपत्तिहेतुत्वविरोधात्, वर्णैस्तदभिव्यक्तेरपि प्रत्येकमयोगात्, वर्णांतरोच्चारणवैयर्थ्यात्, पौनःपुन्येन वाक्यार्थबोधनानुषंगात् समुदितैरपि तदभिव्यक्तेरसंभवात्, वर्णानां समुदायाघटनात्, पूर्ववर्णश्रवणाहितसंस्कारस्य प्रतिपत्तुरंत्यवर्णश्रवणानंतरं तदभिव्यक्तौ तथार्थप्रतिपत्तेरेव सिद्धेः स्फोटपरिकल्पना वैयर्थ्यात्, प्रतीत्यतिलंघनाच्च क्रमविशिष्टवर्णविशेषेभ्य एवार्थप्रतीतिसद्भावात् तेषामेव पदवाक्यरूपत्वोपपत्तेः। न चागममात्रात् पदवाक्यस्फोटप्रतिपत्तिस्तस्य प्रामाण्यसिद्धेः। न चान्यद्ग्राहकमस्ति यतस्तद्व्यवस्था तत्वतः स्यात् तदुक्तं—

नर्ते वर्णात्पदं नाम नच वाक्यं पदादृते। स्फोटाख्यं ग्राहकाभावात् परेष्टस्यास्य तत्त्वतः ॥१॥

यस्य पुनः स्याद्वादिनः शब्दात्मकं वाह्यं वाक्यं पुद्गलरूपं चिदात्मकं चांतरंगमात्मस्वभावं प्रमाणात्सिद्धयति तस्य वाक्यं पत्रं भवेत् प्रोक्तलक्षणेनान्वितं, सिद्धे धर्मिणि वाक्ये तद्धर्मस्योदितलक्षणस्य परीक्षाविषयत्वघटनात्। ननु चानेकांतवादिनोऽपि वाक्यस्य ग्राहकं किं प्रमाणं यतस्तत्सिद्धिरिति चेत् चिदात्मनोऽतरंगस्य स्वसंवेदनप्रत्यक्षं तदात्मरूपत्वात् वर्णपदवाक्यज्ञानपरिणतो ह्यात्मा भावतो वर्णः पदं वाक्यं च गीयते ततएवार्थप्रतिपत्तिघटनात् लिंगज्ञानात्मकभावलिंगाल्लिंगिप्रतिपत्तिवत्, चक्षुरादिज्ञानाद्रूपादिप्रतिपत्तिवच्च, सर्वस्याचेतनस्यार्थप्रतिपत्तिहेतुविरोधात् अन्यत्रोपचारात् तत्कारणत्वात् तत्कार्यत्वाच्च तदुपचारसिद्धेः। तथा वाह्यस्येंद्रियप्रत्यक्षं ग्राहकं तत एव तत्पुद्गलात्मकं तदनात्मकस्येंद्रियप्रत्यक्षग्राह्यत्वानुपपत्तेरिति विचारितमन्यत्र प्रपंचेन। तदुक्तं—

वाह्यं शब्दात्मकं वाक्यमंतरंगं चिदात्मकं। पुद्गलात्मस्वरूपं तु प्रमाणाद्यस्य सिद्धयति ॥ १ ॥
तत्र वाक्यं भवेत् पत्रं तत्त्वतो लक्षणान्वितं। सिद्धे धर्मिणि धर्मस्य परीक्षाविषयत्वतः ॥२॥ इति

स्वाभ्युपगममात्रात् सर्वथैकांतवादिनां विद्यमानमपि वाक्यं धर्मिणः स्वेष्टार्थसाधनत्वधर्माधिकरणं स्वसाध्यार्थाविनाभाविलिंगस्य कस्यचिदपि अनुपपत्तेः तदभिधानात् सर्वस्य हेतोरसिद्धत्वाच्च। तदुच्यते—

वाक्यं सदपि नैकांतपक्षे स्वेष्टार्थसाधनं। स्वासाध्यार्थाविनाभावि लिंगस्यानुपपत्तितः ॥१॥
असिद्धत्वाच्च सर्वस्य हेतोस्तदभिधानतः। कार्थसिद्धिस्तथाचोक्तं तत्त्वार्थश्लोकवार्तिके ॥२॥
तत्र स्वरूपतोऽसिद्धो वादिनः शून्यसाधने। सर्वो हेतुर्यथा ब्रह्मतत्त्वोपप्लवसाधने ॥ ३ ॥
सत्त्वादिः सर्वथा साध्ये शब्दभंगुरतादिके। स्याद्वादिनः कथंचित्तु सर्वथैकांतवादिनः ॥४॥
शब्दाविनश्वरत्वे तु साध्ये कृतकतादयः। हेतवोऽसिद्धतां यांति बौद्धादेः प्रतिवादिनः ॥५॥
जैनस्य सर्वथैकांते धूमवत्त्वादयोऽग्निषु। साध्येषु हेतवोऽसिद्धाः पर्वतादौ तथा मितः ॥ ६ ॥
शब्दादौ चाक्षुषत्वादिरुभयासिद्ध इष्यते। निश्शेषोऽपि तथाशून्यब्रह्माद्वैतप्रवादिनोः ॥७॥
वाद्यसिद्धोभयासिद्धौ तत्र साध्याप्रसाधनौ। समर्थनविहीनः स्यादसिद्धः प्रतिवादिनः ॥ ८ ॥
हेतुर्यस्याश्रयो न स्यादाश्रयासिद्ध एव सः। स्वसाध्येन विनाभावाभावादगमको मतः ॥९॥
प्रत्यक्षादेः प्रमाणत्वे संवादित्वादयो यथा। शून्योपप्लवशब्दाद्यद्वैतवादावलंबिनां ॥ १० ॥
संदेहविषयः सर्वः संदिग्धासिद्ध उच्यते। यथागमप्रमाणत्वे रुद्रोक्तत्वादिरास्थितः ॥११॥
सन्नप्यज्ञायमानोऽत्राज्ञातासिद्धो विभाव्यते। सौगतादेर्यथा सर्वः सत्त्वादिः स्वेष्टसाधने ॥१२॥
न निर्विकल्पकाध्यक्षादस्ति हेतोर्विनिश्चयः। तत्पृष्ठजाद्विकल्पाच्चावस्तुगोचरतः क्वचित् ॥१३॥
अनुमानांतराद्धेतुनिश्चये वानवस्थितिः। परापरानुमानानां पूर्वपूर्वत्र वृत्तितः ॥ १४ ॥
ज्ञानं ज्ञानांतराध्यक्ष वेदतानेनदर्शितः। सर्वो हेतुरविज्ञातोऽनवस्थानाविशेषतः ॥ १५ ॥
अर्थापत्तिपरिच्छेद्यं परोक्षज्ञानमादृताः। सर्वे ये तेप्यनेनोक्ता स्वाज्ञातासिद्धहेतवः ॥१६॥
प्रत्यक्षं तु फलज्ञानमात्मानं वा स्वसंविदं। प्राहुर्ये करणज्ञानं व्यर्थं तेषां निवेदितं ॥१७॥

प्रधानपरिणामित्वादचेतनमितीरितं । ज्ञानं चेत्ते कथं न स्युरज्ञानासिद्धहेतवः ॥ १८ ॥
प्रतिज्ञार्थैकदेशस्तु स्वरूपासिद्ध एव नः । शब्दो नाशी विनाशित्वादित्यादि साध्यसन्निभः ॥१९॥
यः साध्यविपरीतार्थाव्यभिचारी सुनिश्चितः । स विरुद्धोऽवबोद्धव्यस्तद्धर्मेष्टविघातकृत् ॥२०॥
सत्त्वादिः क्षणिकत्वादौ यथा स्याद्वादविद्विषां । अनेकान्तात्मकत्वस्य नियमाद्येन साधनात् ॥२१॥
पारार्थ्ये चक्षुरादीनां संघातत्वं प्रसाधयेत् । तेषां द्रव्यविवर्तत्वमेवमिष्टविघातकृत् ॥ २२ ॥
विरुद्धाश्च विभोर्धीमत्स्वयमिष्टाद्विपर्यये । सामर्थ्यस्याविशेषेण भेदे चातिप्रसङ्गतः ॥ २३ ॥
विवादाध्यासितं धीमद्धेतुकं कार्यकत्वतः । यथा पटमित्यादिविरुद्धोऽनेन दर्शितः ॥२४॥
यथा हि बुद्धिमत्पूर्वं जगदेतत्प्रसाधयेत् तथा बुद्धिमतो हेतोरनेकत्वं शरीरितां ॥ २५ ॥
सशरीरस्य कर्तृत्वे नाशरीरोऽस्ति सर्वथा । कार्मणेन शरीरेणानादिसम्बन्धसिद्धितः ॥२६॥
यतः साध्ये शरीरित्वे धीमतो व्यभिचारिता । जगत्कर्तुः प्रपंचेत तेन हेतुः कुतार्किकैः इति ॥२७॥

यतश्चैवमक्षपादादेः सर्वथैकान्तवादिनः साध्यार्थाविनाभावि लिंगं सर्वथा न सम्भवत्यसिद्धत्वादिदोषदूषितत्वात् तस्मान्न तस्य पत्रं समयदर्थकं प्रतिष्ठापयितुं शक्यं कदाचिज्जैनान् प्रति तदुक्तं—

ततो नैवाक्षपादादेः पत्रं समयदर्थकं । प्रतिष्ठापयितुं शक्यं जातु स्याद्वादिनं प्रति ॥ १ ॥

कुत इति चेत्

तत्त्वाधिगमोपायप्रकाररहितत्वतः । इत्येतस्य प्रसिद्धत्वाद्धेतोरव्यभिचारतः ॥ १ ॥

कः पुनरसौ तत्त्वस्याधिगमो नामेति स्वार्थाकारविनिश्चयः सुनिर्बाध इति ब्रूमः निर्विकल्पकदर्शनस्य विनिश्चयस्य रहितस्यैव तत्त्वाधिगमत्वानुपपत्तेः क्षणक्षयप्रदर्शनवत् स्वाकारमात्रविनिश्चयस्यापि तद्भावायोगात् वेद्याकारविनिश्चयविरहे स्वाकारविनिश्चयस्याननुभवात् स्वसंवेदनस्यापि वेद्यवेदकाकाराग्रहणप्रतीतेः तथार्थाकारमात्रविनिश्चयस्यापि तत्त्वाधिगमत्वाघटनात् स्वाकारविनिश्चयमन्तरेणार्थाकारविनिश्चयविरोधात् । स्वार्थाकारविनिश्चयस्यापि कालान्तरादौ सबाधस्य तद्विरोधात् मरीचिकाविनिश्चये तोयविनिश्चयवत्, देशकालान्तरापेक्षयापि सुष्ठु निर्बाधस्य तथाभावसिद्धेरिति प्रपंचितत्वादन्यत्र । तदुक्तं—

तत्त्वस्याधिगमस्तावत्स्वार्थाकारविनिश्चयः । सुनिर्बाधोऽन्यथा तस्य व्यवस्थानुपपत्तितः ॥१॥

तर्हि कस्तस्योपाय इति चेत् कथ्यते साकल्येन प्रमाणं देशतो नयः प्रतिपत्तुस्तत्त्वाधिगमोपायः प्रतीयत एव तस्य शास्त्रे विस्तरतः समर्थितत्वात् न चासौ सर्वथैकान्तवादिनामक्षपादादीनामुपपत्तिमास्कंदति तेषां स्वेष्टस्य दृष्टेष्टबाधितत्वात् इति विचारितमाप्त प्रपंचतोऽन्यत्र परीक्षादक्षबुद्धिभिर्लक्षणीयं, त एव हि संक्षेपेणाप्युक्तं लक्षयितुं क्षमंते तदुक्तं—

तस्योपायः पुनः कार्त्स्न्येनैकदेशेन वा मतः । प्रतिपत्तुः प्रमाणं वा सन्नयो वा प्रतीयते ॥ १ ॥
न चासौ सर्वथैकान्तवादिनामुपपद्यते । दृष्टेष्टबाधनात्तेषां स्वेष्टस्येत्यपि चिंतितं ॥ २ ॥
लक्ष्यं प्रपंचतोऽन्यत्र परीक्षादक्षबुद्धिभिः । संक्षेपतोऽप्युपक्षिप्तं ते हि लक्षयितुं क्षमाः ॥ ३ ॥

कः पुनस्तत्त्वाधिगमोपायस्य प्रकारः इति चेत् प्रतिपाद्यं प्रति साधुशब्दैस्तस्य स्फुटं प्रदर्शनं प्रकारः । न चाक्षपादादीनां सर्वथा तत्प्रकारस्यास्ति प्रमाणवाक्यासंभवात् । तदप्यभाणि—

प्रकारस्तस्य सद्वाचा प्रतिपाद्यं प्रति स्फुटं । दर्शनं न चैतेषां तत्प्रकारस्यास्ति सर्वथा ॥ १ ॥

तदनेनैकान्तवादिनां पत्रवाक्यं, न संमयदर्थकं, तत्त्वाधिगमोपायप्रकाररहितत्वात् इत्यनुमानं समर्थितं प्रतिपत्तव्यं तथा पत्रवाक्यं गूढमन्यथार्थगूढादि वादिना त्रिभिरभिहितं सतः त्रयो वा तथैकविंशति वा परिषत्प्रतिवादिभ्यामविज्ञातार्थं यदा तदा तदेवाविज्ञातार्थं नाम निग्रहस्थानमापातं तल्लक्षणस्यान्वयात् तत एव चाप्रतिभाविनिग्रहस्थानं तत्तो प्रत्येतस्य यदा स्वयमप्यस्यार्थे व्याचष्टे वादिप्रतिवादिपरिपत्प्रसादनाय तदापि पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं तेन मिथ्यार्थप्रतिपादनात् तत्प्रतिपादितार्थस्य विरुद्धत्वादिसिद्धेरनेकान्तेन साधनात् स्याद्वादिभिः पक्षान्तरप्रमाणस्यानेकान्तार्थस्य साधने मिथ्यात्वप्रतीतिर्विप्रति-

पत्तिरिति लक्षणस्य भावात् वाक्छलं वा संभवदर्थपरित्यागेनासंभवतोऽर्थस्य परिकल्पनात् न हि प्रमाणबलान्नैयायिकादिपरिकल्पितः पत्रवाक्ये संभवन्नर्थः सिद्धः प्रत्यक्षादिबलादनेकांतस्यैव प्रसिद्धेः प्रत्यक्षं हि तावत् बहिरंतश्च तत्त्वं भावाभावात्मकं व्यवस्यति सर्वथा विरोधाभावात् बाधकरहितं जातुचित् एकांतस्यासाक्षात्करणात् तथाभूतानेकधर्माधिष्ठानं भावः विशेषणविशेष्यादिव्यवहारान्यथानुपपत्तेरित्यनुमानाच्च सर्वं भावाभावात्मकं सिद्धं । आगमाच्च सुनिर्बाधकप्रमाणादिति प्रपंचतोन्यत्र तत्त्वार्थालंकारे देवागमे च प्रोक्तमिह पत्रपरीक्षायां सद्भिरवगतव्यमित्यलं प्रपंचेन तदप्युक्तं ।

तथा त्रिःसप्तकृत्वोऽपि पत्रवाक्यमुदीरितं । वादिना गूढमन्यच्चाविज्ञातार्थमुपागतं ॥ १ ॥
परिषत्प्रतिवादिभ्यामविज्ञातत्वसद्धितः । ततश्चाप्रतिपत्तिः स्यान्निग्रहस्थानमंजसा ॥ २ ॥
वक्तुर्विप्रतिपत्तिर्वा मिथ्यार्थप्रतिपादनात् । विसंवादकतायोगात् तदुक्तार्थस्य तत्त्वतः ॥ ३ ॥
स्याद्वादिभिः पुनः पत्रस्यानेकांतसाधने । भवेद्विप्रतिपत्तिर्वाक्छलं वा लक्षणान्वयात् ॥४॥
तद्धि संभवतोऽर्थस्य परित्यागेन कल्पनं । यदसंभवतोर्थस्य प्रमाणबलतश्छलं ॥ ५ ॥
न चेह संभवन्नर्थो यौगादिपरिकल्पितः । प्रत्यक्षादिबलात्सिद्धस्ततोनेकांतसिद्धितः ॥ ६ ॥
भावाभावात्मकं वस्तु बहिरंतश्च तत्वतः । प्रत्यक्षं निश्चिनोत्येव सर्वथा बाधवर्जितं ॥ ७ ॥
वास्तवानेकधर्माधिष्ठानं भावो विशेषतः । विशेषणविशेष्यादिव्यवहारप्रसिद्धितः ॥ ८ ॥
सिद्धमित्यनुमानाच्चानंतधर्मसमाश्रितं । समस्तं वस्तु निर्बाधादागमाच्च प्रमाणतः ॥ ९ ॥
इति प्रपंचतः प्रोक्तमन्यत्रेहावगम्यतां । सर्वं पत्रपरीक्षायां सद्भिरित्युपरम्यते ॥ १० ॥

तदेवं पत्रविचारप्रकरणपरिसमाप्तौ विजिगीषोः स्याद्वादिनो वचनं चतुरंगं निराकृताशेषमिथ्याप्रवादप्रसरं श्रिया सम्यग्दर्शनादिलक्षणयोपायभूतयोपमेयानंतज्ञानादिलक्षणलक्ष्मीपर्यंततया सदा जयत्विति जयवादेनासंशयति—

जीयान्निरस्तनिश्शेषसर्वथैकांतशासनं ।
सदा श्रीवर्द्धमानस्य विद्यानंदस्य शासनं ॥ १ ॥

सूक्ताभासो भवति भवतस्तावदुच्चारहेतुः
स्वस्यान्येषां गुरुतमतमस्छिच्च माध्यस्थभाजां ।
तन्मत्वैवं विपुलमतिभिस्तत्र यत्नो विधेयो
नानंदायाखिलखलधियां तं हि कः कर्तुमीशः ॥ २ ॥

इति श्रीस्याद्वादपतिविद्यानंदस्वामिविरचिता
पत्रपरीक्षा समाप्ता ।

